# वीरपृथ्वीराजविजय
# नाटकम्

रचयिता—
महामहोपाध्यायः
मथुराप्रसाददीक्षितः

सं० २०१७
(1960

[ मूल्य १।)

# वीरपृथ्वीराज-नाटकम्

लेखकः—
महामहोपाध्यायः
पं० मथुराप्रसाद दीक्षितः

प्राप्तिस्थानम्—

मोतीलाल बनारसीदास
पोस्ट बक्स नं० ७५,
नैपाली खपरा, वाराणसी।

चौखम्भा संस्कृत सिरीज आफिस
पो० बक्स नं० ८,
चौखम्भा वाराणसी।

# भूमिका

प्रतिनायकनाशेन नायकस्यापि संहृतेः ।
, कारुण्यरसतो व्याप्त-मिदं दुःखान्तनाटकम् ।। १ ।।

श्री भरतमुनिदर्शितरीत्या दुःखान्तनाटकस्य भारते कविभिरसंमानितस्यापि पाश्चात्यदेशेषु तथाभूतनाटकस्य समादरात्, कारुण्यरसस्य नाटके विशेषतः परिपाकाच्च । तदेतद् अनुसृत्य अनुभूय च मयाऽप्येतद् दुःखान्तं नाटकमाद्रियते ।

श्रीमता भवभूतिना तु यथा जलस्यैव तरङ्गबुद्बुदादिका विकारास्तथैव शृङ्गारादिकाः सर्वेऽपि रसाः करुणरसस्यैव अङ्गभूता भवन्तीति प्रतिपादितम् ।

विचारधारामानीयमानं चैतत्प्रतिभाति—यदा सामाजिका नाटकान्ते परामृशन्तो गेहं गच्छन्ति तदा परस्परं वदन्तः सन्तो यथा कारुण्यरसस्यानुभूतम् अनिर्वचनीयं रसं प्रशंसन्ति न तथा इतरान् शृङ्गारादीन् । अपि च यथा विभावानुभावयोरुपशमे शृङ्गारस्य अचिरस्थायित्वमनुभूयते न तथा करुणस्य इति दुःखान्तमिदं नाटकं कृतम् ।

अत्र प्रथमेऽङ्के पृथ्वीराजस्य आखेटगमने गौरीमहम्मदस्य दिल्लीं प्रति अभियानं युद्धे तद्ग्रहणे सशपथमनभिगमनप्रतिज्ञा, तन्मोक्षश्च । पुनरन्तःपुरे स्थितायाः कर्णाटक्याः सविधे कैमासमन्त्रिणः आगमनमासक्तिं चाविगतस्य राज्ञो विधुरत्वं तद्वधः ।

द्वितीयेऽङ्के कान्यकुब्ज (कन्नौज) पुरं प्रति पृथ्वीराजस्य अभिषेणः, संयोगिताया हरणं च।

तृतीये परिषदि उत्सवप्रस्तावे चन्देन शोकप्रदर्शनात् सामन्तानां दुःखित्वम्, शोकाकुलितस्य पृथ्वीराजस्य अन्तःपुरे गमनम्।

चतुर्थे कुमारस्य हस्तिना चामुण्डराजं प्रति आक्रमणे कृते तेन हस्तिनो मारणम्, ततश्च राज्ञा चामुण्डस्य कारागारदण्डः। एतदन्यायाद् बहूनां सामन्तानां मृतसामन्तदायादानां च स्वस्वगेहे गमनम्।

पञ्चमे अभिषेणः गौरीमहम्मदस्य। उदयपुराधिपतेः समरसिंहस्य, पृथ्वीराजसाहाय्याय आगमनम्, पृथ्वीराजेस्य इतरसामन्तानां च समागमे परिषदि युद्धनिश्चयः। पृथ्वीराजस्य विजयः। विजये वीरपानप्रसक्तानां मदविह्वलानां सामन्तानां गौरीसैनिकैराक्रम्य अर्द्धोत्थितानामनुत्थितानां च मारणम्, पृथ्वीराजग्रहणं गौरीकारागारे गमनं च।

षष्ठे दिल्लीराजस्य चक्षुषोर्निष्कासनम्, चन्दवरदायिनस्तत्रागमनम् गौरीमहम्मदसन्निधे चन्दवरदायिनः शब्दवेधिवाणप्रस्तावः, तत्प्रबन्धः। मन्त्रिणो विरोधेऽपि देवीप्रसादाद् गौरीमहम्मदस्य स्वीकृतिः। घटिकानां बन्धनम्, पृथ्वीराजस्य घटिकाशब्दश्रवणतो वेधाय आगमनम्। गौरी-महम्मदेन, मारय इति शब्दोच्चारणे कृते, तत्समनन्तरमेव तद्वधः, भरतवाक्यं चेत्यपूर्वमिदं दुःखान्तनाटकम् इति।

पं० मथुराप्रसाद दीक्षित

१४९ हजरियाना, झाँसी।

# प्राक्कथनम्

वीररसात्मकमिदमपूर्वं पृथ्वीराजविजयं नाम नाटकम्, यत्र भारते राज्याधिपतिक्षत्रियाणां चरमसीमामापन्नस्य पृथ्वीराजस्य लोकोत्तरं शौर्यमस्ति। अयं राजा सुप्रबन्धको युद्धप्रियश्चासीत्। यो हि विपक्षिणो राज्ञो विजित्य यथासंभवं सम्बन्धं विधाय तान्सामन्तान् स्वकीयान्कुर्वन् प्रायशः आत्मसमीपे दिल्लीपत्तने एव न्यवासयत्। तथाऽवर्तत येन तेषां हृदि कदाचिदपि स्वगेहे गन्तुमभिलाष एव नोदपद्यत, सहोदरभ्रातॄनिव ते परस्परमवर्तन्त। सर्वेऽपि ते देव्याराधनतो लब्धवरस्य पृथ्वीराजस्याभिन्नमित्रस्य चन्दकवेः कवितामुपश्रुत्य शूरा वीरा दशसहस्रवीरयोद्धृयोधयितारश्च समपद्यन्त।

अथैकदा राज्ञा सहैव तेषु सर्वेषु दूरतरमाखेटाय गतवत्सु राज्ञा सामन्तैश्च रहितां वीरशून्यां दिल्लीमवगत्य विश्वासघातिना कोषाध्यक्षेण भोन्दूसाहनाम्ना गजनीतो गौरीमहम्मदयवनो दिल्लीं विजेतुं वक्रेणैव घग्घरनदीमार्गेणाहूतः। अत्रान्तरे पृथ्वीराजस्य गुप्तचरः सर्वं विज्ञाय लाभपुर ( लाहौर ) पर्यन्तं स यवनः सम्प्राप्त इति तं विज्ञापितवान्। ततश्च आगच्छन् स यवनः सैनिकरहितैः एव सामन्तैः घग्घरनदीप्रान्ते संनिरुध्य अयोधिष्ट।

अथ वीराग्रणीः काकाकह्नो लोहानाचामुण्डराजयोः साहाय्येन तं विजित्य बध्वा च राज्ञः पृथ्वीराजस्य सविधे नीतवान्। नायकशून्या महम्मदगौरीसेना च न्यवर्तत। अथ किंचित्कालानन्तरमभियोगविचारार्थम् सभायामानीतस्य तस्य प्राणदण्ड एव सर्वैः स्थिरीकृतः। स यवनश्च तदेतदुपश्रुत्य पृथ्वीराजस्य चरणयो-र्निपत्य प्राणभिक्षामयाचत। एवं विचारप्रतिबन्धकं तमवगत्य द्वारस्थकोष्ठे प्रैषिषत पृथ्वीराजः। अत्रान्तरे कान्यकुब्ज ( कन्नौज ) नगरतः समागतो

गुप्तचरः । स च तत्र संयोगितास्वयंवरे जयचन्द्रेण द्वारपालस्थाने स्थापितां पृथ्वीराजस्य लौहप्रतिकृतिमसूचयत् । तदेतदुपश्रुत्य सर्वे सामन्ताः क्रोधाविष्टा अभूवन् । तत्र स्वयंवरे समागतानां राज्ञां समक्षं कथमीदृशोऽपमानः सह्यः स्यादिति पृथ्वीराजोऽप्यकथयत् । ततश्च तत्प्रतिशोधार्थम् तत्र गत्वा योद्धव्यमेवेति जाते निश्चये गौरीमहम्मदेन सह किमनुष्ठेयमिति सर्वेऽपि द्वैविध्यमापन्नाः । यतो हि कृते तस्य प्राणदण्डे तत्पुत्रादीनामभियानमवश्यं स्यादित्युभयत्र युद्धं हानिकरमेवेति निश्चये तेन सह सन्धिरेव ज्यायानिति पक्षः स्थिरीकृतः ।

अथ मन्त्रिणा सह काकाकह्वस्तेन साकमनुकूलसन्धिकरणार्थम् गतः । तत्र गत्वा सन्धिं कृत्वा समागतौ तौ तेन सहैव । एवं च गौरीमहम्मदः कुरानमानाय्य तत्साक्षिकतया प्रतिज्ञातवान्, गान्धारपर्यन्तं देशो भवतामधीनो भविष्यतीति । यावज्जीवमहं भवतां प्रतिकूलं नैवाचरिष्ये । एवं सन्धिं विधाय तं विसर्ज्य च कान्यकुब्जनगरेऽभियातुं सामन्तमात्रसहायः स इयेष । अथ तत्र गतः सौधप्रान्ते पर्यटन् स लौहप्रतिकृतिस्वरूपमेव स्वीकृतवत्या स्वस्मिन्नेवासक्तया तया संयोगितया दृष्टः । स च संयोगितादूत्याऽऽहूतः, तत्र गत्वा तामानेतुं प्रतिज्ञाय स्वशिविरे आगत्य सामन्तैः सह सम्मतिं कृत्वा च चामुण्डमात्रसहायः शंखं धमन् दिवस्येव तामनैषीत् ।

अथ जयचन्द्रः शंखशब्दं श्रुत्वा सर्वम् वृत्तं समवगत्य महत्याः सेनायाः साहाय्येन युयुधानः पराजितः । पृथिवीराजो दिल्लीं प्राप्य संयोगितायां तथाऽऽसक्तो यतः परिषद्यागमनमपि तेन परित्यक्तम् । इतः स्वं हन्तुं धावतो रैनसीकुमारहस्तिनो चामुण्डेन मारणात् तदपराधं मन्यमानेन राज्ञा स निगडितः । ततश्चातिविषयासक्तं बुद्धिशून्यं राजानमवगत्य बहवः सामन्ताः स्वं स्वं देशं गतवन्तः । इति सर्वमवगत्य जयचन्द्रः मन्त्रिणा मित्रैः राजभिश्च प्रतिषिद्धोऽपि दिल्लीं प्रति गौरीमहम्मदमभ्यषेणयत् ।

अथ समागतेन समरसिंहेन सामन्तैश्च प्रतिबोधितः पृथ्वीराजः सदसि समाहूतः समागतश्च । अथ राज्ञा ससम्मानं प्रतिमोचितश्चामुण्डश्च समागतः । कतिचन सामन्ताश्चेति तेषां साहाय्येन कृते युद्धे पृथ्वीराजो व्यजेष्ट, इति विजय-पताकामारोप्य वीरपाने कृते मद्येन यदा सर्वे विह्वला अर्धनिद्रालव इव जाताः, तदा मन्त्रिणा कतिभिश्चन सैनिकैः सह कुतोऽपि स यवनराजः आगत्यार्धोत्थि-ताननुत्थितान् पृथ्वीराजसामन्तान् निहत्य पृथ्वीराजं च बध्वा गजनीमनैषीत् कारागारे न्यपातयच्चेति । अथैकदा यवनराजो गौरीमहम्मदः पृथ्वीराजं द्रष्टुम-गच्छत् । तत्र गत्वा क्व गतं ते शौर्यमित्युपालब्धः पृथ्वीराजस्तं कुरानसाक्षिकं विहितशपथमस्मारयत्, उक्तवांश्च । रे यवनापसद ! अनुत्थितान् मद्यमदमग्नान् तान्सामन्तान्निहत्य वल्गन् किं न लज्जसे इति क्रूरदृष्ट्या सगर्वमवादीत् । एवं क्रुद्धेन तेन यवनेन तस्य राज्ञश्चक्षुषी निष्कासयितुमाज्ञाप्य निर्गतम् । इतः कांगड़ा-धिपतिं हाहुलीराजं प्रतिबोधितुं यो गतवानासीत् चन्द्रवरदायी स तेनैव राज्ञा रुद्धः अथ स यथाकथंचिन्निष्क्रम्य पदातिरेव पर्यटन् दिल्लीमागत्य स्वपुत्रात् "वीरपाननि-मग्नाः ससमरसिंहाद्यः सर्वेऽपि सामन्ता हताः, पृथ्वीराजश्च निबध्य गृहीत्वा च तेन यवनेन स्वपत्तनं नीतः" इति सर्वमशुश्रुवत् स्वपुत्रात् जह्लणात् । भवितव्य-तामेव कारणं मन्यमानः कविः वैरं प्रतिशोधयितुं गजनीमगच्छत् । तत्र देवीप्रभा-वाद् द्वारपालं प्रभाव्य गौरीमहम्मदसंमुखमगमत्, पृष्टस्तेन यवनेन स अवादीत्— रामकृतसप्ततालभेदनमिव वक्रप्रक्रियया निबद्धाः सप्तापि घण्टिका एकेनैव बाणेन स राजा भेत्स्यति इति तेन प्रतिज्ञातं तदेव द्रष्टुमहमागतः । तद्भेदनमप्रत्ययमानो यवनराजः तं सज्जीकर्तुमकथयत् । किमयं कथयतीति ज्ञातुं गुप्तचरं च प्रैरयत् । चन्देन प्रतिबुद्धः स राजा यवनराजेनाहूतः । स तत्र चत्वरे आगत्यातिष्ठत्, यत्र सर्वोऽपि समारम्भः सज्जीकृतः । अथ यवनराजः इदमत्रोचत्, सत्यमस्य सफलता-यामस्य राज्यमहं परावर्तयिष्ये, इत्याकर्ण्य चन्दकविरवोचत् भवतामादेशादेव

भेत्स्यति तदैव पारितोषिकभाग्भविष्यति, स्वीकृतं चाज्ञापयितुम्। एवं च वादितासु सर्वासु घण्टिकासु नैव बाणममुञ्चत् सः। एवं चाक्षिप्य यवनराज उवाच-भो कवे ! कथं न घण्टिका भिन्नाः। स कविरप्यवोचत्, भवद्भिस्तु आज्ञा न कृता इति भेदे कथं पारितोषिकं लप्स्यते। ततश्च पुनरपि घण्टिका वादिताः। यवनराजः 'वेधय' इत्युच्चरन्नेव तालुदेशे विद्धो निपतितो मृतश्च। इतः पृथ्वीराजस्याग्रहेण चन्दकविना पृथ्वीराजः स्वच्छुरिकया हतः। अथ मुमूर्षुर्निपतन् पृथ्वीराजः चन्दकविं भित्वा तयैव छुरिकया अमारयत्। एवं च प्रतिनायको नायकेन हतः, नायकश्च कारणवशात् स्वकीयानुमत्या स्वसहायकेन चन्दकविना हतः। कविरपि नायकेन मित्रेणेति दुःखान्तमपूर्वमिदं नाटकम्।

भारतीयैः प्रायशो दुःखान्तानि नाटकानि न कृतानि, किन्तु सुखान्तान्येव। परन्तु वास्तविकविचारे करुणरसस्य विशेषतया परिपाकात् यथा दुःखान्तानि चमत्कारानन्दजनकानि न तथेतराण्यनुभूयन्ते। पण्डितवरेण भवभूतिनाऽपि करुणरसस्यैव स्वरूपा इतरे रसा उच्यन्ते, जलस्य तरंगबुद्बुदविकारा इव। यथा अभिनयसमाप्त्यनन्तरं गच्छन्तो दुःखान्तेषु नाटकेषु रसास्वादमनुभवन्ति, न तथा सुखान्तेषु। अत एव पाश्चात्यैः दुःखान्तान्येव नाट्कानि क्रियन्त इत्यलमत्र बहूक्तेन।

पं० सदाशिवदीक्षितः साहित्याचार्यः

# समर्पणम्

विश्वविश्रुतवाराणसेयराजकीयसंस्कृतमहाविद्यालयस्य पाश्चात्यराज्येऽपि प्रथमभारतीय-
प्रधानाचार्याणां प्रयागविश्वविद्यालयोपकुलपतीनां प्राच्यपाश्चात्यविद्यास्वसाधारण-
वैदुष्योपपन्नानां प्रातःस्मरणीयानां म० म० डि. लिट् सर गंगानाथझा-
महोदयानां योग्यतमतनयस्य प्रशासनपटोर्महाविदुषो वाराणसेयसंस्कृत-
विश्वविद्यालयप्रथमोपकुलपतेः स्वनामधन्यस्य श्रीमद्आदित्य-
नाथझामहानुभावस्य करकमलयोः पाश्चात्यप्रक्रियोपपन्नमिदम-
पूर्वं वीरपृथ्वीराजविजयं नाम नाटकं सादरं समर्पयते

म० म० मथुराप्रसाददीक्षितः

# वीरपृथ्वीराज-नाटकम्

## प्रथमोऽङ्कः

सूत्रधारः—( प्रविश्य )

यस्याः साम्यपदाय विद्रुमगणोऽम्भोधौ तपस्वीयते,
मञ्जिष्ठाऽपि धराधरस्य शिखरे गाढं तपश्चर्यते ।
बान्धूकं कुसुमं त्वधोमुखतया स्थित्वा तपस्यत्यलं,
सा विष्णोश्चरणप्रभा विजयते त्रैविष्टपे मण्डले ॥ १ ॥
गौरीमुखेऽतिसरसा मनोजे तीव्रदारुणा ।
विबुधेषु सदा स्निग्धा सा दृष्टिर्मे प्रसीदतु ॥ २ ॥

अलमतिस्तवेन ( इतस्ततोऽवलोक्य ) अहो विद्वद्भिराज्ञप्तोऽहम्, श्रीदुर्गाभगवतीमहोत्सवे समागतान् इमान् विदुषो, राज्ञोऽपरांश्च प्रसादयितुम् । तत्कतमेन नाटकेन उपस्थातव्यम् । ( इति परामृशति )

( ततः प्रविशति मारिषः )

मारिषः—( प्रणम्य ) आर्य ! सर्वे सज्जीकृताः ।

सूत्रधारः—मारिष ! केन नाटकेन उपस्थातव्यमिति न स्मर्यते ।

मारिषः—आर्य ! ननु वीरपृथ्वीराजनाटकमुपस्थापयितुमाज्ञप्तं तत्रभगवता भवता, तत्किमिति न स्मर्यते ।

सूत्र०—आम्, आम् , सर्वं स्मृतम् । कार्यभारातिशयादिदानीं विस्मृतमिव ।

मारिषः—आर्य ! दुखान्तमिदं नाटकम् , ततः कुतोऽस्मिन् बहुमानः ?

सूत्र०—आः सकलशास्त्रनिष्णातेन नाटकनिर्माणप्रसिद्धप्रज्ञेन विद्यावारिधि-सर्वतन्त्रस्वतन्त्र—महामहोपाध्यायपदविभूषितेन पं० मथुराप्रसाददीक्षितेन प्रणीदमिदं नाटकम्, इत्यस्मिन् कुतो न बहुमानः स्यात् ।

दुःखान्तकं परमथापि सुखैकरूपं
लोकप्रबोधजनकं समयानुकूलम् ॥
देशोत्थितिं च विदधत्सदसन्नयाढ्यं
तस्मादिदं भवति मे बहुमानपात्रम् ॥ ३ ॥

मारिषः—साधु, साधु, ज्ञातम् ।

कपटेनापि विजयं शत्रोरार्यः समाचरेत् ।
न कुर्याद् भेदमात्मीयै-रिति लोकप्रबोधकम् ॥४॥

सूत्र०—आम्, सम्यक् तत्त्वमवगतम् ।

( ततो जवनिकातः ) गृह्यताम् गृह्यताम्, मा पलायताम्, मा पलायताम् ।

सूत्र०—( चकितचकितम् ) मृगयूणामिव कुतोऽपि शब्दः श्रूयते ।

( ततो निर्गच्छति जवनिकातो मृगयुवेषधारी काकाकह्वचामुण्डराय-प्रभृतिभिः सहितः पृथ्वीराजः । )

( प्रणम्य सूत्रधारमारिषौ निष्क्रान्तौ )

## इति प्रस्तावना

( सर्वे यथेच्छमुपविशन्ति )

पृथ्वीराजः—

हस्ताहस्ति विधायैव भल्लूकाधिपतिं क्षणात् ।
निपात्य वीराधिपतिः काकाकह्वो जयत्यसौ ॥ ५ ॥

चामुण्डः—( सहासम् ) अयमपि महाभल्लूकाधिपतिः । क इमे वराका भल्लूकाः अस्य समक्षम् । सर्वानपि एकेनैव हस्तेन निपातयितुं समर्थः ।

चन्दः—अथ किम् । पश्य—

नासा दीर्घमहोन्नताऽतिविपुले नेत्रे सिता दन्तकाः
स्कन्धौ नन्दिककन्धरेण सदृशौ बाहू गतौ जानुके ।
वक्षो गोपुरगाढपीवरबृहद्विद्युत्कपाटानुगं,
मन्येऽसौ खलु दैत्यराक्षसपतिः किं वा हिडम्बासुतः ॥६॥

सर्वे—( स्मयन्ते ) साधु साधु, वीरोऽयम् ( इति प्रशंसन्ति )

मन्त्री कैमासः—अयं परमवीराग्रणीः । पश्य, वज्रऋषभनाराचसंहननश्चास्ति ।

आक्रामन् केसरी भाति धावंश्चापि प्रकम्पनः ।
शत्रुसंघस्य संहार-मेकाकी कर्तुमीश्वरः ॥ ७ ॥

पृथ्वीराजः—( सपरितोषं निर्वर्ण्य ) अथ किम् ।

कह्नः—मन्त्रिन् ! चामुण्डोऽपि मनुष्यरूपेण समुत्पन्नो दैत्यराज एव ।
येन—

मुक्तामण्डितवक्रतीक्ष्णनखरो दीर्घां चरन् हुंकृतिं,
विद्युद्वेगपतंश्च मध्यनिहतो द्वेधाऽसिना केसरी ।
आरण्या महिषास्तरक्षुकिरयो येन क्षणात्पातिता
सोऽयं वीरवराग्रणीर्विजयते चामुण्डराजो रणे ॥ ८ ॥

पृथ्वीराजः—महाबलिष्ठोऽयम् ।

चन्दकविः—महाराज ! भवतः परिषदि सर्वेऽपि सामन्ता एकैकाधिकाः, कः कस्मादधिक इति नैव वक्तुं पार्यते । पश्य—

बुद्ध्यैव शत्रुविजयं कैमासः कर्तुमीश्वरः ।

लोहानः—

नूनं जन्मान्तरादेष चाणक्यः समुपागतः ॥ ९ ॥

( ततः प्रविशति अरण्याधिपतिः )

अरण्याधिपतिः—विजयतां विजयतां देवः ।

पृथ्वीराजः—कीदृगारण्यकवृत्तान्तः ?

अरण्याधिपतिः—

एकः खे द्विजराजमध्यमहितः सुस्थो मृगो मोदते
बर्हीं शक्तिधरस्य राजति सुखी हंसो गिरः शोभते ।
शेते शैलसुताहरिर्गजमुखः क्रीडत्युमाङ्कान्तरे
लीनास्त्वद्भयतोऽपरेऽरिकुटिलाः सर्वेऽप्यरण्योद्भवाः ॥१९॥

पृथ्वीराजः—मन्ये इदानीं सर्वमरण्यं हिंस्रकजीवरहितमेव संजातम् ।

अरण्याधि०—अथ किम् ।

( ततः प्रविशति वनस्पतिग्रहणवेषधारी रामदत्तपुरोहितो गुप्तचरः )

गुप्तचरः—( दुरतोऽवलोक्य आत्मगतम् ) एते भद्रपुरुषा वीरासनेन तिष्ठन्तीति मन्ये अत्र महाराजः स्यात् । ( पुनः किञ्चिद् गत्वा महाराजमवलोक्य सहर्षम् । ( प्रकाशम् )

जयतु जयतु महाराजः ।

( किञ्चिद् विवक्षुः, एकान्तमभिलषन्निव स्थितः )

पृथ्वीराजः—( इङ्गितेन तदभिप्रायमवगत्य ) एते सर्वेऽप्यभिन्ना एव मद्-हृदयत इति विस्रब्धं ब्रूहि ।

गुप्तचरः—महाराज ! कोषमभिलषता भवतः कोषाध्यक्षेण भींदूसाहेन गौरीमहम्मदसमीपे अभियानाय किमपि लिखितम् । तत्रेद-मपि बोधितम्, यदिदानीं पृथ्वीराजो मृगयायै गतः । सामन्तमन्त्रिप्रभृतयोऽपि तेनैव साकं गताः, इति घग्घरनदीं समुत्तीर्य वक्रादेव मार्गाद् देहलीमभियायाः । मन्ये शून्य-मिदानीमेतत्स्थानमित्यनायासेनैव जयः सर्वाधिकारश्च ते संपत्स्यते । अन्यदेतद्वचनादवगन्तव्यम् ।

पृथ्वीराजः—( निःश्वस्य सक्रोधं मनसि ) अरे रे दुष्टाधिपते ! आर्य-कुलकलङ्क ! भींदूसाह !

उष्णीषे निहितः सर्पः कुर्वता त्वां धनाधिपम् ।
विश्वासघातकफल–मिदानीमुपभुज्यताम् ॥ ११ ॥

( प्रकाशम् )

( आज्ञापत्रं लिखति )—"कारागृहाधिपते ! असौ भोंदूसाह आजन्म कारागारे निगडीक्रियताम्" ( इति लिखित्वा सर्वान् श्रावयति । )

सर्वे—साधु साधु । युक्तमेवैतत् । ( मन्त्री पत्रं गृहीत्वा बहिर्गत्वा स्वकीयानुचरेण पत्रं प्रेष्य पुनरागत्य यथास्थानमुपविशति )

पृथ्वीराजः—( आकाशं लक्षीकृत्य ) आः यवनापसद ! भेदभावकुशल ! भीरुभीरो !

( स्वखड्गं स्पृशन् )—

वीराणां सरणिं विहाय समराद् भीतो भिदामाचरन्,
रिक्तं राज्यमवेक्ष्य तस्कर इवागच्छन् धृतस्त्वं भवेः ।
किञ्चान्यत् शमनातिथिं च सबलं त्वां प्रापयिष्यामहे,
नो चेद् दैवगतोऽन्तरायवशतस्त्वन्मोचकः स्याद् विधिः ॥१२॥

( सर्वेऽपि सामन्ताः क्रोधात्स्पन्दमाना इव स्वं स्वं खड्गं स्पृशन्ति )

पृथ्वीराजः—ततस्ततः ।

गुप्तचरः—ततस्त्वरया संभावितवीरसैनिकैरभिगच्छन् स मार्गे मुक्तः, संभावयामि द्वित्रैर्दिनैर्घग्घरसमीपमागच्छेत् । अतः परं देवाः प्रमाणम् ।

पृथ्वी०—साधु । गच्छ, यथेच्छं समाचर । ( गतः पुरोहितो गुप्तचरः । ) मन्त्रिन् ! कथमत्रानुष्ठेयम् ।

मन्त्री—( सर्वतः सामन्तानवलोकयन् ) महाराज ! कोऽयं वराकः । एकैकाधिकास्तव सामन्ताः, यमेवाज्ञापयिष्यसि स एव एनं ग्रहीष्यति ।

पृथ्वी०—( चन्दं पश्यन् ) कथय वरदायिन् !

चन्द:—( इष्टदेवीं स्मृत्वा ) महाराज ! काकाकह्न: साधारणसंग्रामं विधाय क्षणादेनं ग्रहीष्यति, स एव सेनापतिः क्रियताम् ।

सर्वे सामन्ताः—साधु, साधु । अस्याधिपतित्वे वयं संनद्धाः, तं ग्रहीष्यामश्च ।

चन्द:—( काकाकह्नं निर्दिशन् )

एष म्लेच्छमहामहीपतिबृहत्सैन्यं क्षणान्मर्दयन्,
श्येनो लावकवत् तमाशु निवहात् धृत्वैव संगंस्यते ।
चामुण्डोऽपि विपक्षिपक्षदलने कालीसमायोधनो,
लोहानानुगतः समस्तयवनांस्तत्रैव संरोत्स्यते ॥ १३ ॥

कह्न:—

गौरीमहम्मदममुं कातरं वीरमानिनम् ।
जीवग्राहं ग्रहीष्यामि प्रतिजाने स्पृशन्महीम् ॥१४॥

( इति भूमिं स्पृशन् प्रणमति । पृथ्वीराज उत्थाय स्वहस्तेन खड्गमर्पयति । सर्वे समुत्थाय स्वस्वखड्गं निष्काश्य ऊर्ध्वीकृत्य च सुप्रसन्नाः पर्यटन्तो गायन्ति । )

कुरुत सुवीरा रिपुकुलनाशम्,
विदधत यशसो जगति विकाशम् ॥
अरिगणयवनान् विनिहत मूलाद्,
शूलाद् रहितान् गमयत महितान् ।
भारतभूमिं सुनयत कुनयात्, निगमागममुपनयतामरताम् ।
कुरुत सुवीरा रिपुकुलनाशम्, विदधत यशसो जगति विकाशम्॥१५॥



( इति संग्रामोन्मत्ताः सर्वे गायन्तो निर्गच्छन्ति । )

[ पटोन्नयनम् । ]

( देहल्यां स्थितः सिंहासनासीनः पृथ्वीराजः, मञ्चस्थौ चन्द्रमन्त्रिणौ च । परतश्च बद्धहस्तं कारागाराद् गौरीमहम्मदं गृहीत्वा काकाकह्वः, तदनु चामुण्डरायो लोहानश्च प्रविशन्ति । )

पृथ्वी०—( स्मित्वा ) रे रे यवनराज !

वीरशून्यां परिज्ञाय दिल्लीं जेष्याम्यहं क्षणात् ।
इति मत्वाऽभिगच्छंस्त्वं किं शौर्यं न कलङ्कसे ॥१६॥

चामुण्डः—आः शूरम्मन्योऽसौ, निःसत्त्व इव काकाह्वेन निगृहीतः ।

गौरी मह०—( स्फुलिङ्गानिव वमता तीक्ष्णेन चक्षुषा पश्यन् । )

दैवाज्जयाजयौ स्यातां यो वीरो वीर एव सः ।
खड्गे मे पतिते मां तु धृत्वा यातः पलायनम् ॥१७॥

पृथ्वी०—( तुष्यन्निव ) वीरस्त्वमसि । बद्धोऽपि निर्भीक इव ब्रवीषि । ( पुनरेनं सर्वतोऽवलोक्य ) आः किमर्थमसौ बद्धः ? ।

मन्त्री०—रुष्टः कदाचिदनार्यमाचरेदिति शङ्कया ।

पृथ्वी०—( स्वभुजमवलोकयन् ) निःशस्त्रोऽयं किं विधास्यतीति बन्धनान्मुच्यताम् ।

गौरी०—साधुरसि, श्रुतप्रभावादप्यधिकोऽसि, परमकारुणिकश्चासि ।

पृथ्वी०—( आसन्दीं निर्दिशन् ) आस्यतां यवनराज ! ( इति हस्तसंज्ञया उपवेशयति । )

गौरी०—आदावर्य[1] ! यथा ते आज्ञा ( इति एकेन हस्तेन हृद्गतोऽसीति सूचयन्निव तन्मुद्रामाचरन् आसन्द्याम् उपविशति )

पृथ्वी०—मन्त्रिन् ! सभ्याश्च कथयत, अस्याभियोगे किं विधातव्यम् ? ।

---

१—आदौ अर्यः, आदिकाले श्रेष्ठः ।

मन्त्री—

आजन्म निगडीभूतः कारागारे सुखं वसेत् ।
समयो यतमानाय किञ्चिदस्मै प्रदीयताम् ॥१८॥

चामुण्डः—

हन्यतामेष मायावी शूरम्मन्यो दुराग्रही ।
हतेऽस्मिन्नाभियानस्य द्विषां हृद्यङ्कुरो भवेत् ॥१९॥

चन्दः—

एते म्लेच्छकुलोद्भवास्तु सततं जित्वाऽऽर्यदेशोद्भवान्
अस्मत्पूर्वगतान् बहूँश्च शिशुकान् धृत्वा स्वदेशं गताः ।
द्वित्रैश्चापि पणैः स्वकीयविपणौ विक्रीय तान् बालकान्
दासांश्चैव विदेधिरे क्षणमपि क्षम्या न चास्मादिमे ॥२०॥

काकाकह्नः—अयं तु न तथा व्यधात् ।

लोहानः—यद्ययं जेता अभविष्यत् तदा अयमपि तथैवाकरिष्यत् ।

गौरी महम्मदः—( कह्नमवलोकयन् तत्संज्ञया पृथ्वीराजचरणयोः पतन् । ) महाराज !

भवतां शौर्यमज्ञात्वा दुष्टमाचरितं मया ।
एष वोऽनुचरीभूतः प्राणान् दीनोऽभियाचते ॥२१॥

( इति वदन् तस्य पादौ गृह्णाति )

पृथ्वी०—( हस्तेन उत्थापयन् ) उत्तिष्ठ, उत्तिष्ठ, क्षणं विश्रम्यताम् । ( इति स्वभृत्येन बहिः कोष्ठे उपवेशयति । )

( ततः प्रविशति द्वारपालः । )

द्वार०—जेदु जेदु देओ । कण्णोजपत्तणओ भोदीओ गुत्तअरो पत्तो ।
[ जयतु जयतु देवः । कान्यकुब्जपत्तनतः भवदीयो गुप्तचरः प्राप्तः ]

पृथ्वी०—प्रवेशय । ( दौवारिकश्चरं प्रवेश्य निष्क्रान्तः । )



चारः—जेदु २ महाराओ । [ जयतु जयतु महाराजः ]

पृथ्वी०—कथय, यज्ञवृत्तान्तम् , का वा स्वयंवरवार्त्ता ।

चारः—सुणोदु महाराओ । तत्थ जण्णम्मि ण कोऽवि बम्हणो संजुत्तो आसि । सव्वे चेव बम्हणा विरोहं काऊण गयाओ । एगेण कहिअं वि । के क्खु रायाणो जियाओ । जेण रायसूअं करिस्सदि त्ति । सुअंवरो वि पक्खम्मि होहिस्सदि त्ति णिच्छिअं । तत्थ दुआरपालट्टाणम्मि भोदीया पडिकिई ठाविअत्ति । अओ परं भवन्तो पमाणं ।

[ शृणोतु महाराजः । तत्र यज्ञे न कोऽपि ब्राह्मणः संयुक्त आसीत् । सर्व एव ब्राह्मणा विरोधं कृत्वा गताः । एकेन कथितमपि—के खलु राजानो जिताः, येन राजसूयं करिष्यते इति । स्वयंवरोऽपि पक्षे भविष्यतीति निश्चितम् । तत्र द्वारपालस्थाने भवदीया प्रतिकृतिः स्थापितेति । अतः परं भवन्तः प्रमाणम् ]

पृथ्वी०—गच्छ यथेच्छं स्वकार्यं साधय । ( ततो निष्क्रान्तश्चारः । )

( पुनः मन्त्रिणं सर्वान् सामन्तांश्च उद्दिश्य । )

भो श्रुतं चारवचनम् ! कथयन्तु भवन्तः । अतः परं किं विधेयम् ।

त्रिपक्षगौरीहनने ऽस्य सैन्ये पुत्रादिषु स्यात्प्रतिशोधलिप्सा ।
अतो भवद्भिः परितो विचार्यं सन्धौ शुभं स्यात्किमु विग्रहे वा ॥२३॥

अपि च—संयोगितास्वयंवरे विविधदेशदेशान्तरतः समागतानां महाशौर्यशालिनां राज्ञां समक्षमीदृगनादरः कथं सह्यः । यदहं लौहप्रतिकृत्या द्वारपालस्थाने स्थापितोऽस्मि ।

( तच्छ्रुत्वा सर्वे द्वैविध्येन संस्तब्धा इवासन् । )

चन्दः—महाराज ! अनेन यवनराजेन साकं स्वाभिमतसंधिं विधाय एव ससम्मानं प्रेष्यताम् । अनन्तरं च जयचन्द्रस्योपरि ससैन्यं सज्जीभूय अभियास्यताम् ।

पृथ्वी०—किमत्र युज्यते मन्त्रिन् ?

मन्त्री—साधूक्तमनेन । परं जयचन्द्रस्योपरि ससैन्यमभियानं न मे रोचते । यतस्तत्प्रकाशने सोऽपि सन्नद्धो भविष्यति । सति युद्धे स्वयंवरसमागताः सर्वेऽपि राजानस्तदनुयायिनो भविष्यन्ति । एवं च राजसंघसहायतासंपन्नस्य तस्य पराजयो दुष्करो भविष्यति ।

पृथ्वी०—( किञ्चिद् विमृशन् ) ततः किं कर्तव्यम् ।

मन्त्री—अतः शौर्यसंपन्नान्स्वसामन्तान् आदाय तत्र भवद्भिर्गन्तव्यम् । तत्र गत्वा यथावसरं विधेयम् ।

चन्दः—भवान् ।

मन्त्री—अहं तु अग्रेसरो भूत्वा प्रबन्धं गुप्तचरकार्यं च संपादयिष्यामि, यथावसरं योत्स्ये च ।

पृथ्वी०—( चामुण्डराजाभिमुखं पश्यन् ) कथय चामुण्डराज ! किं विधेयम् ।

चामुण्ड०—इदानीं युक्तं तु एवमेव प्रतिभाति, परं तु—

गूढपाद् म्लेच्छराजोऽसौ प्रतिशोधचिकीर्षया ।
प्रतीक्षमाणः समयं नूनं समभियास्यति ॥ २४ ॥

मन्त्री—यथा नायमभियायात् तथा सन्धीयताम् ।

कह्वः—मन्त्रिन् ! एहि आवामेवमेव विधास्यावः ।

पृथ्वी०—मन्त्रिन् ! गच्छ, अभिमतसन्धिं साधय ।

( ततो निष्क्रान्तो मन्त्रिणा सह कह्वः । )

चामुण्डः—अयं ममाभिमतसन्धिं स्वीकरिष्यतीति तु निश्चितम् , परं तु न जाने कुतो मे वेपते हृदयम् ।

चन्द्रः—यद्यपि अयं विश्वासभूमिर्नास्ति तथापि इदानीं सन्धिरेव साधीयान् ।

पृथ्वी०—इदानीम् एवमेव विदधातु, यदि पुनरप्ययमभियास्यति तदा समूलघातमेनं हनिष्यामः ।

( ततः प्रविशति कह्लमन्त्रिभ्यां सहितो यवनराजः । सर्वे यथास्थानमुपविशन्ति )

मन्त्री-( उत्थाय ) महाराज ! अयं यवनराजो गान्धारदेशपर्यन्तमुपायनीकृत्य कुरानसाक्षिकं सन्धिं याचते ।

पृथ्वी०—स्वीकरोमि, परं तु सत्यप्रतिज्ञो भवतु ।

गौरी—कह्लनराज ! सेनापते ! कुरानम् आनाय्यताम् ।

कह्लः—( चक्षुःसंज्ञया भृत्येन आनाय्य ) यवनराज ! गृह्णीष्व ।

गौरी—( उत्थाय ) कुरानं हस्तयोर्गृहीत्वा । ).

यावज्जीवं विधास्येऽहं सौहार्दं साधुसङ्गतम् ।
कुरानसाक्षिकमिदं प्रतिजाने क्षमस्व माम् ॥ २४ ॥

( इत्युक्त्वा कुरानं स्थापयित्वा पादयोः पतति )

पृथ्वी०—( उत्थाप्य वक्षःस्थलेन गाढमालिङ्गति ) आस्यतां यवनराज !
( इत्युक्त्वा वस्त्राभूषणानि आनाय्य ददाति )

कह्ल ! किञ्चिद् दूरपर्यन्तं त्वमेव एनमनुगच्छ, अनन्तरं च संभावितैर्वीरैरसौ गृहपर्यन्तं प्रापणीयः ।

कह्लः—यथा भवतामाज्ञा । ( इत्युत्तिष्ठन् भ्रूसंज्ञया यवनराजं गन्तुं बोधयति ।

गौरी—( उत्तिष्ठन् ) विजयस्व ( इत्युक्त्वा पृथ्वीराजहस्तेन हस्तौ मेलयति अन्येषामपि हस्तेन हस्तं मेलयन् निष्क्रामति ।

( ततः प्रविशति यवनिकायां पृथ्वीराजः, अन्येऽपि यथास्थानं निर्गच्छन्ति । )

[ पटोन्नयम् । ]

( रात्रौ इञ्छिनीसमीपे स्थितः पृथ्वीराजः किमपि परामृशति )

इञ्छिनी—महाराज ! अधुना कर्णाटक्यां गणिकायां कैमास आसक्तः ।

पृथ्वी०—आः कथं मयि जीवति ममैव गेहे एवं सम्भाव्यते । अथवा किं तया ।

यथा विपश्चिन्निचयं व्रजन्त्यमूस्तथैव वैधेयकुलं समाश्रिताः।
भटेष्वधीरेषु च तुल्यदृष्टयो भवन्ति यत्ताः प्रकृतेस्तथाविधाः॥२६॥

इङ्गिनी०—तथापि ईदृगनाचारो नान्तःपुरे युज्यते। पश्य, मन्त्रिणः कीदृशं साहस्यम्।

पृथ्वी०—युक्तमुक्तम्, असह्यमेतस्य दौरात्म्यम्। ( सक्रोधम् अन्तर्गृहे गत्वा धनुर्बाणं चादाय धनुषा बाणं संदधाति। क्वासौ दुरात्मा )

इङ्गि०—विद्युत्प्रकाशे विलोकयिष्यते। ( ततो विद्योतते विद्युत्, तत् प्रकाशे तमवलोक्य शरं मुञ्चति। पुनः )

इङ्गि—( विद्युत्प्रकाशे समवलोक्य ) उभौ हतौ।

पृथ्वीराजः—साधु सञ्जातम् ( अहम् प्रातरेव राष्ट्रपालेन उद्घोषयिष्ये, केनेमौ हतौ, इत्यनुसंधीयताम्। अनुसन्धाता दश सहस्रं पारितोषिकं लप्स्यते। दासीं प्रेष्य स्वकीयं बाणं चानाययति।

( ततो निष्क्रान्तौ उभौ )

( पटाक्षेपः। )

इति श्रीसर्वतन्त्रस्वतन्त्र-विद्यावारिधि-महामहोपाध्याय पं० मथुराप्रसाद-दीक्षितकृते वीरपृथ्वीराजनाटके प्रथमोऽङ्कः।

# द्वितीयोऽङ्कः

[ पटोन्नयनम् ]

( ततः प्रविशतः पुष्पावचयं नाट्यन्त्यौ ललिताप्रियंवदे )

( विष्कम्भः )

ललिता—पियवदे ! अज्ज पियसहीए संजोगिदाए सुअंवरो, परं ण जाणे केण कारणेण सही रोइदि । से चक्खूंसि आसार विट्ठिं कुणति, खणं वि ण सुविदि ।

[ प्रियंवदे ! अद्य प्रियसख्याः संयोगितायाः स्वयंवरः, परं न जाने केन कारणेन सखी रोदिति । तस्याः चक्षुषी आसारवृष्टिं कुरुतः । क्षणमपि न स्वपिति । )

प्रियं०—ललिदे ! किं ण सुदं तुए, जं एसा पुढवीरायं अहिलसइ; जयचन्दराओ रुट्ठो णिसेहेइ ।

[ ललिते ! किं न श्रुतं त्वया, यत् एषा पृथ्वीराजमभिलषति, जयचन्द्रराजा रुष्टः सन्निषेधयति । ]

ललि०—पियंवदे पुढवीराओ सूरो वीरो सुन्दरो जुवा ! सव्वहा सो जोग्गो,सहीए साहु चिओ । राया कुदो णिसेहेइ ?

[ प्रियंवदे ! पृथ्वीराजः शूरो वीरः सुन्दरो युवा । सर्वथा स योग्यः, सख्या साधु चितः । राजा कुतो निषेधयति ? ]

प्रियं०-सहि ! इह क्खु बहुदरं वत्तव्वं संखेवेण सावेमि ।

[ सखि ! इह खलु बहुतरं वक्तव्यम्, संक्षेपेण श्रावयामि ]

ललि०--सावेउ अवहिदा सुणोमि ।

[ श्रावयतु । अवहिता शृणोमि ]

प्रियं०-दिल्लीराअस्स अणंगपालस्स दुवे चेव कण्णगे, सुन्दरी कमला अ। सुन्दरी विजय-चन्देण सह विवाहिदा। परं सो य सगलरज्जलाहलोहेण कमलं वि परिणेदुं अहिलसइ

[ दिल्लीराजस्य[1] अनङ्गपालस्य द्वे एव कन्यके, सुन्दरी कमला च। सुन्दरी विजयचन्द्रेण सह विवाहिता, परं स च सकल-राज्यलाभलोभेन कमलामपि परिणेतुम् अभिलषति। )

ललि०--दुट्ठो सो। तं सवतिणिं ठाविय रज्जं अहिलसइ। तदो, तदो।

[ दुष्टः सः। सपत्नीं स्थाप-यित्वा राज्यम् अभिलषति। ततस्ततः ]

प्रियं-तदो अणंगपालो दूअमुहेण कहिओ। तेण रण्णा पडिसेहे जुज्झिउँ समागओ, सोमसराइसामंताणं साहज्जेण अणंगपालेण सो पराजिओ, कण्णउज्जपुरं परावट्टिओ।

[ ततः अनङ्गपालो दूतमुखेन कथितः। तेन राज्ञा प्रतिषेधे योद्धुं समागतः। सोमेश्वरादि सामन्तानां साहाय्येन अनङ्ग-पालेन स पराजितः। कान्य-कुब्जपुरं परावर्तितः। ]

---

१—एवं कमलाया अपि ग्रहणार्थम् अनङ्गपालेन सह विजयचन्द्रस्य युद्धमभूत् तत्र सोमेश्वरादि साहाय्येन पराजितो विजयपालः परावर्तितः। तत्र सोमेश्वरशौर्यं समवलोक्य तुष्टेन अनङ्गपालेन तेन सह कमला विवा-हिता। तदनन्तरं सुन्दर्यां विजयचन्द्राज्जयचन्द्रः, कमलायां सोमेश्वरात् पृथ्वीराजो जातः। संयोगिता जयचन्द्रवंशीया भगिनीत्वेन अभिमता वंश-वृक्षशाखया भगिनी भवति, न तु जयचन्द्रमातुः सुन्दर्याः सुता। तथाभूत-कार्यदर्शनात्। सुन्दर्याः तस्याः सुमुत्पत्तौ प्रमाणाभावात्। तत्सुताऽपि न तथाभूतस्याप्रसिद्धेः। किञ्च सर्वैः सामन्तैः चन्द्रकविना च समर्थितमिति मन्यते धर्मानपेत एव सन्बन्ध इति दिक्।

ललि०—तदो तदो । [ ततस्ततः । ]

प्रियं०—तदो तुट्ठेण रण्णा सोमेसरस्स कमला कन्ना दिण्णा । एव्वं विजयचन्दस्स जयचन्दो सोमेसरस्स पुढवीराओ जाओ। [ ततः तुष्टेन राज्ञा सोमेश्वराय कमला कन्या दत्ता । एवं विजयचन्द्रस्य जयचन्द्रः सोमेश्वरस्य पृथ्वीराजो जातः।]

ललि०—(भ्रूसंज्ञया) सव्वं अवगअं । एव्वं खु एदं । किं जयचन्दस्स संजोगिदा भइणी ? [ भ्रूसंज्ञया ) सर्वमवगतम् । एवं खल्वेतत् । किं जयचन्द्रस्य संयोगिता भगिनी ? ]

प्रियं०—णहि णहि । तव्वंसीया भ(व)इणीसमाणा । वंस साहाए भइणी होइ। कहं अण्णहा तारिसो छत्तिओ धम्मविरुज्झं करिस्सइ । [नहि नहि तद्वंशीया भगिनीसमाना वंशशाखया भगिनी भवति कथमन्यथा तादृशः क्षत्रियो धर्मविरुद्धं करिष्यति । ]

ललि०-एव्वं चेव सव्वं। सहि ! सुणिज्जइ पुढवीराओ सुअंवरे ण आगमिस्सइ [ एवमेव सर्वम् । सखि ! श्रूयते, पृथ्वीराजः स्वयंवरे न आगमिष्यति, ]

प्रियं०—णहि णहि सो उ दुआरि लोहपडिकिदीए ठाविओ, एव्वं सोऊण रुट्ठो सो इहेव्व आगओ। [ नहि नहि स तु द्वारि लोहप्रतिकृत्या स्थापितः, एवं श्रुत्वा रुष्टः स इहैव आगतः ]

( ततः श्रूयते ढक्काशब्दः । )

( कर्णं दत्वा )

ललि०—सहि ! आरभिज्जइ सुअंवरसमारोहो । ललि०—सखि आरभ्यते स्वयंवरसमारोहः ।

( इति त्वरितपदैरुभे गच्छतः । )

[ पटोन्नयनम् । ]

( एकाकिनी उपविष्टा संयोगिता किमपि चिन्तयति । ततः प्रविशति संयोगितां बोधयितुं सपत्नीको जयचन्द्रः । )

जय०—अरे संयोगिते ! किं त्वमाग्रहं न त्यजसि ?

संयो०—मया तु पृथ्वीराज एव वरणीयः ।

जय०-( दन्तान् पिंसन्-सक्रोधम् ) रे दुष्टे ! कुलपांसुले ! स तु अस्मद्वंशपरंपरानुगतः परिपन्थी ।

शूरंमन्यः कातरोऽसौ दुष्टो दैत्यान्ववायजः ।
ततः सुक्षत्रियं कंचिद् गृहीत्वा सुखमाप्नुयाः ॥१॥

संयो०—

दैत्यान्ववायजनितोऽपि च दुर्ग्रहः स्यात्
किन्त्वाऽपि पावकभवोच्चनृपोद्भवः स्यात् ।
शूरो भवेदरिभवोऽप्यथ कातरो वा
यो वाऽपि कोऽपि स भवेन्मम तु प्रियोऽसौ ॥ २ ॥

जय०—अरे दुष्टे ! दुराग्रहं त्यज । नासौ आकारितः । अपरं स्वानुरूपं कमपि राजानं पतिं वृणीष्व ।

संयो०-यद्यसौ नाकारितो नागतो वा तदा स्वयंवरमण्डपमेव नाहं गमिष्यामि ।

( जयचन्द्रः किं कर्तव्यताविमूढ इव स्थितः किमपि चिन्तयति । )

महाराज्ञी—

वत्से ! कुलानुगमुपेहि वचो गृहाण
वस्त्राणि चापि परिधेहि नयस्व माल्यम् ।
संभाव्य राजककुले स्वमनोनुकूलं
वीरं वृणीष्व नृपतिं पतिमात्मतुल्यम् ॥३॥

संयो०—मया तु स वृत एव। यद्यसौ तत्र नास्ति तदा मण्डपमपि नाहं गमिष्यामि ।

( जयचन्द्रः असिं निष्काश्य तां जिघांसितुं धावति।
महाराज्ञी अन्तरा तं गृह्णाति । )

जय०—( क्रुद्धः सन् ) त्यज त्यज ।

अधुनैव निहत्यैनामस्याः क्रूरदुराग्रहम् ।
कथाशेषं क्षणादेव नयेऽहं पश्य सुस्थिता ॥ ४ ॥

( महाराज्ञी राज्ञः पादौ पतति । ) रक्षैनाम् । अवध्यैषा । अहमेनां प्रतिबोधयामि ( इत्यनुनयति । राजा क्रुद्धः सन् श्वसन्निर्गच्छति )

महाराज्ञी—बाले ! आग्रहं मुञ्च । वंशप्रतिकूलेऽस्मिन् पृथ्वीराजे स्नेहं मा कार्षीः ।

मण्डपे शतशो भूपाः स्थिता नीतिविशारदाः ।
कन्दर्पदर्पहन्तारस्तेषु त्वं वृणु कञ्चन ॥ ५ ॥

( सा अधोमुखी स्थिता नैव जिगमिषति । ततः प्रविशति प्रियंवदा तस्याः सखी । )

महा०—प्रियंवदे ! इयं ते सखी स्वयम्बरे नैव जिगमिषति ।

प्रियं०—कहं णु णेव्व गमिस्सदि । अहं पडिबोहइस्से अवस्सं गमिस्सदि।
[ कथं नु नैव गमिष्यति । अहं प्रतिबोधयिष्ये अवश्यं गमिष्यति । ]
( पुनः किञ्चित्परावृत्य सखी समीपं गत्वा )

सहि ! सुअंवरे कहं णु गच्छसि ? [ सखि ! स्वयंवरे कथं नु गच्छसि । ]

संयो०—सखि ! पित्रा उक्तम् , तत्र प्राणनाथो दिल्लीपतिर्नागतोऽस्ति । अहम् अन्यं द्रष्टुमपि नैव गमिष्यामि । वरणस्य तु का कथा ।

प्रियं०—( कर्णप्रान्ते ) सहि ! जयचन्देण दुवारि लोहपडिकिदिए पुढविराओ ठाविओ । तत्थ गंतूण लोहपडिकिदिं चेव पुढवीराअं वरसु को दोसो ।

[ सखि ! जयचन्द्रेण द्वारि लौहप्रतिकृत्या पृथ्वीराजः स्थापितः तत्र गत्वा लौहप्रकृतिमेव पृथ्वीराजं वृणीष्व को दोषः । ]

संयोगिता—( सुप्रसन्ना सती ) एवं खलु युज्यते ।

प्रियं०—माए सही संणज्झइ । [ मातः सखी संनह्यते । ]

महा०—( वादित्राणि वादयति । )

[ पटोन्नयनम् ]

( यथास्थानं राजानः स्थिताः । माल्यं गृह्णती सखीसहिता संयोगिता अनवलोकयन्ती शनैः शनैः द्वारि गत्वा तत्रस्थं लौहप्रतिकृतिं पृथ्वीराजं माल्यं परिधापयति । उच्चैः वाद्यन्ते वादित्राणि )

केचन—नायं क्षत्रियः, किंतु ढुंढाराक्षसवंशीयः ।

अपरे—अयं क्षत्रियवंशशिरोमणिः । अग्निसमुद्भूतचाह्वान (चतुर्बाहुवाण) वंशीयः सर्वश्रेष्ठो धीरो वीरश्च ।

पुरोहितः—( प्रविश्य हस्तमुद्यम्य च )

अलं कोलाहलेन, श्रूयताम् ।

स्वयंवरा कुमारीयं वृणुते स्वेच्छया पतिम् ।
स एवास्ति पतिस्तस्या उत्तमो वाऽधमो भवेत् ॥ ६ ॥

जयचन्द्रः—( सहसा प्रविश्य असिं निष्कास्य सक्रोधम् ) कथमियं मद्विरोधिनं वृणुते । अहमेनां छित्वा पृथ्वीराजस्य वैरं शोधयामि ।

पुरोहितः—राजन् ! स्वयंवरेयं कुमारी, यतः—

अयं विपक्षी किमु वा सुहृत्स्यात् शूरोऽथवा कातरतामुपेतः ।
यो वाऽपि को वाऽपि वृतः कुमार्या पतिंवरायास्तु पतिः स एव॥७॥

जय०—अपसर । अहमेनां कथावशेषां नीत्वा अस्या मुखं नावलोकयिष्ये ।

पुरो०—शान्तो भव। शृणु। सखीसहितामेनां गङ्गाप्रासादे स्थापय। पतिबन्धुताविरहिता एकाकिनी स्वकृतं चिन्तयन्ती स्वयं कथावशेषं गमिष्यति।

महाराज्ञी—( सहसा प्रविश्य सविनयम्। ) साधु पुरोहितेनोच्यते, एवं स्वयमियं कथावशेषं गमिष्यति। कन्यावधप्रायश्चित्तमपि न भविष्यति।

जय०—एवमेव विधीयताम् ( इति वदन् निष्क्रामति )

[ पटोन्नयनम् ]

पृथ्वीराजः—( प्रासादस्य अधो दूरे स्थितः किमपि चिन्तयति। ) तमवलोक्य संयोगिता सख्यै पत्रं दत्त्वा तस्य समीपे तां प्रेषयति। सखी उपेत्य तस्मै पत्रं ददाति। स पत्रं गृहीत्वा मनसि वाचयति।

तव रूपेणेर्ष्यालुर्दिवानिशं मां स्मरस्तु तापयते।
भवदायत्तप्राणां रक्षेमां मा व्यलम्बिष्ठाः ॥ ८ ॥

( तत्सखीं समलोक्य। ) भद्रे! गच्छ अनुपदमेवागच्छामि।

सखी—( संयोगितासविधे प्रविशति। )

संयो०—( दीर्घं निःश्वस्य ) सखि! किमुक्तम्?

सखी—( सहर्षम् )

पेक्ख सो क्खु इदो एव्व आगच्छदि।

[ पश्य स खलु इत एव आगच्छति। ]

संयोगिता—( परिहितं वस्त्रं यथास्थानं विदधती अवहिता उत्तिष्ठति। )

पृथ्वी०—अलम् अलम्। ( बाहुं गृहीत्वा आत्मसन्निधौ उपवेश्य च तन्मुखं पश्यन् ) तव प्रेम्णा सौन्दर्येण च क्रीतोऽस्मि।

( सा सुप्रसन्ना दीर्घं निःश्वसिति। )

पृथ्वी०—अलमतः परं शोकोद्वेगेन।

कालिदास

मदनस्त्वां तापयते मां तु दहति सर्वतस्त्वदासक्तम् ।

संयो०—

नय मां चणशो गेहं दासीभूत्वा निवत्स्यामि ॥ ६ ॥

पृथ्वा०—क्षणं तिष्ठ । स्वसामन्तैः पितृव्येण च प्रकारं सम्मन्त्र्य अधुनैव समागच्छामि । अलमिदानीमुद्वेगेन । धैर्यमवलम्बस्व अहमेष गच्छामि ।

( इति निर्गतः पृथ्वीराजः )

ततो निष्क्रान्ताः सर्वे ।

इति श्रीसर्वतन्त्रस्वतन्त्र विद्यावारिधि-महामहोपाध्याय—
पं० मथुराप्रसाददीक्षितकृते वीरपृथ्वीराज-
नाटके द्वितीयोऽङ्कः ।

———

# तृतीयोऽङ्कः

—:-०-:—

[ पटोन्नयनम् ]

( कतिभिश्चन स्वसामन्तैः सह परामृषति पृथ्वीराजः )

पृथ्वी०—संयोगिता आगन्तुं समुद्युक्ता, तन्मार्गोऽपि निर्बाध एव ।

चामुण्डः—अहमुद्युक्तोऽस्मि, अधुनैव आनीयताम् ।

प्रद्यूनराजः—नैवं युज्यते, एवं विज्ञाते जयचन्द्रो महत्या सेनया प्रतिरोत्स्यते ।

देवराजः—रात्रौ अपह्रियताम् ।

काकाकह्नः—नाहं पाटच्चरवृत्तिं समर्थये ।

रात्रौ पश्येन्नैव नः खड्गधारां युद्धे शौर्यं कौशलं नावगच्छेत् ।
ध्वान्ते वीरं वीरयानं प्रपन्नं द्युलोके कं देवकन्या वृणीयुः ॥१॥

मन्त्री—अहं तु एवमवगच्छामि, यद् महाराजः संयोगितां नीत्वा विजयशंखं धमन् दिल्लीं व्रजतु । योद्धुमागच्छन्तीं विपक्षिणः सेनां पञ्च एव सामन्ताः प्रतिरुन्धन्तु । तेषु कस्यचिद् वीरगतौ अपरस्तत्स्थानीयो भूत्वा अवरुणद्धु ।

चन्दः—साधु साधु । युक्ततरं चैतत् ।

नूनं दैत्यगुरुं शुक्रमतिशेते नये भवान् ।
त्वदन्यं नैव नीतिज्ञं वीरं पश्यामि तादृशम् ॥२॥

पृथ्वी०—युक्तमेतत् । अहमेव तामानेतुं गच्छामि । ( इति वदन्निर्गच्छति )

चामुण्डः—अहमप्यनुगच्छामि ( इति वदन् सोऽपि निर्गच्छति । )

[ पटोन्नयनम् ]

( पृथ्वीराजस्तामानयन् शंखं धमति । चामुण्डोऽपि तमनु शंखं धमति )

जयचन्द्रः—मन्त्रिन् ! कुतोऽयं विजयशंख इव श्रूयते ।

मन्त्री–( सोद्वेगं स्वयं बहिर्गत्वा आगत्य च )

महाराज ! पृथ्वीराजः संयोगितामपहरति । तस्यैकः पृष्ठरक्षकश्च ।

जय०– ( सहसा )

गृह्यतां हन्यतामेष न च गच्छेत्कथंचन ।
संयोगितापहरणे सर्वस्वमपहारितम् ॥ ३ ॥

मन्त्री०—( बहिर्गत्वा सेनासंनाहाय पटहं वादयति । )

सेनापतिः—( उपतिष्ठते )

मन्त्री—सेनापते !

तूर्णं मत्तमतंगजा दश शतं धृत्वा करे शृङ्खलां,
सेनायाः पुरतो व्रजन्तु परतः स्युः पारसीका हयाः ।
काम्बोजाश्च वनायुजाश्च जवनास्त्रिंशत्सहस्रं समे,
शूलं पाशमसिं करेषु दधतो गच्छन्तु तत्सादिनः ॥ ४ ॥

लक्षं पदातयो यान्तु युद्धविद्याविशारदाः ।
रथिनोऽपि रणोन्मत्ताः शूराः सन्तु शतं पुरः ॥ ५ ॥

एवं संनाह्य, संयोगितामपहृत्य विजयशंखं धमन् ( अङ्गुल्या निर्दिशन् ) योऽयं पृथ्वीराजो गच्छति, असौ त्वरितमेव गृह्यताम् । अधुना नाति-दूरं गतः । अहमपि महाराजेन सह अनुपदमेवागच्छामि ।

सेना०—कोऽयं वराकः, कियन्तोऽपि तस्य सहायकाः संरक्षकाश्च सन्तु

अधुनैव तत्सहायकान् संरक्षकान् हत्वा तं च धृत्वा बद्ध्वा आनेस्यामि। पञ्चघटिकामात्रं प्रतीक्षस्व।

मन्त्री-( सस्मितम् ) मा गर्वं कार्षीः। किन्तु नावलोकयसि। यदयं संयोगितां गृहीत्वा विजयशंखं धमन् युयुत्सुरिव यथेच्छं शनैः शनैर्व्रजति, न तु पलायते। किं च अस्य एकैकाधिकाः सामन्ताः, सहस्रयोधिनश्च। किन्न श्रुतम्, यदेकेनैव काकाकह्वेन गौरी महम्मदो रणे गृहीत्वा दिल्ल्यामानीय संधाय च मुक्तः। ईदृशा अस्य षडुत्तरम् अथवा अष्टोत्तरं शतं सामन्ताः सन्ति।

सेनापतिः—सन्तु, किं तेन, युष्माकं योद्धारोऽपि सहस्रयोधिभ्यो न न्यूनाः।

मन्त्री—अस्तु, त्वर्यताम् २ ( पुनर्जयचन्द्रसविधे प्रविशति। )

जय०—मन्त्रिन्, तद्ग्रहणाय प्रबन्धो विहितः ?।

मन्त्री—प्रबन्धस्तु कृतः, सेनापतिनाऽपि प्रतिज्ञातम्, यत् 'पञ्चघटिकामात्रं प्रतीक्षस्व, अधुनैव बद्ध्वा आनेष्यामि।' इति। परमहं तु तद्गतिविधिमवगत्य ग्रहीतुमशक्यं संभावयामि। अहमेवं मन्ये, नायमेकमात्रसहायः किन्तु सर्वेऽपि सामन्ताः सहैवागताः। इदं तु संभाव्यते, सेनारहितः स्यात्।

जय०—त्वरितं संनह्यताम्। मा गमत्।

सामन्तैः सहितो ममैव भवनात्कन्यां हठान्नीयते
शक्तोऽशक्त इव प्रसुप्तमनसेवालोकये सुस्थितः।

( निःश्वस्य )

निर्यातं कुटिलं न चेदहमिमं युद्धे परैर्ग्राहये
तर्ह्यग्निं प्रविशेयमीशशपथादेतत्प्रतिज्ञायते ॥६॥

मन्त्री—( मनसि ) उभयथाऽपि असदेतत्।

नास्याग्निपातं वाञ्छामि नापि दिल्लीपतेर्ग्रहम् ।
तद्ग्रहे भारतस्यैव दासता स्यादिति ध्रुवम् ॥७॥

(प्रकाशम्) महाराज ! अलमेतत्कल्पनया, अहमधुनैव गत्वा तं विजित्य बद्ध्वा च आनयामि । (ततो निर्गच्छति मन्त्री ।)

जय०—(एकाकी स्थितश्चिन्तयति ।)
आः कथं नाद्यापि सेनातः कोऽपि समायातः ।

(मनसि) अस्तु । तावद् अन्तःपुरे गत्वा राज्यै संयोगिताहरणं विज्ञापयामि । (इति जवनिकायां प्रविशति ।)

[पटोन्नयनम्]

(स्वपत्न्या सह जयचन्द्रः स्थितः ।)

जय०—राज्ञि ! पृथ्वीराजः संयोगिताम् आहार्षीत् ।

राज्ञी—हठात्, तदिच्छया वा ? ।

जय०—तदिच्छायाः परिज्ञानं तु लौहप्रतिकृतेर्वरणेनैव विदितम् ।

राज्ञी—एष तु अस्माकं कलङ्क एव ।

जय०—अथ किम् । परं मन्त्री सेनापतिश्च, गृहीत्वा आनेतुं प्रतिज्ञाय गतौ !

राज्ञी—(निःश्वस्य) अस्य सर्वेऽपि सामन्ताः सहस्रयोधिनस्ततोऽप्यधिकाश्च । मन्ये सामन्ताः सेनां निरोत्स्यन्ति । स च संयोगितां नीत्वा निर्गमिष्यति ।

जय०—संभाव्यते चैवम् । अस्तु । तावद् बहिर्गत्वा निरीक्षे, युद्धस्थलात् कोऽपि समायातो न वा । किं वृत्तम् ।

[पटोन्नयनम् ।]

जयचन्द्रः—(एकाकी स्थितः किमपि चिन्तयति, ततः प्रविशति युद्धस्थलादायातः पुरोहितः ।)

पुरो०—(हस्तमुद्यम्य) जयतु जयतु देवः। (सुप्रसन्नः सन्) जितं देवेन।

जय०—(प्रसन्नः सन्) किं पृथ्वीराजो गृहीतो हतो वा ?।

पुरो०—(विमनस्क इव) पृथ्वीराजस्तु न गृहीतो नापि हतः। किन्तु कह्नो हतः। यो हि शौर्येण द्रुततरगत्या च विद्युदिव सर्वत्रैव व्याप्तः प्रतीयते स्म। येन प्रधानभूताः पञ्चषसहस्रं योद्धारो हताः, बहवो हया गजाः सहस्रशः सादिनश्च।

जय०—चामुण्डराजो हतो निर्गतो वा ?

पुरो०—स तु पृथ्वीराजेन सहैव शंरक्षकत्वेन गतः।

जय०—चन्दः।

पुरो०—सोऽपि नैव हतः।

जय०—(सोच्छ्वासम्।)

चन्दोक्तं विरुदं निशम्य सुभटः कः कह्नतां नाप्नुयात्,
चामुण्डस्य समक्षमेतदखिलं सैन्यं न मन्ये स्थिरम्।
पुण्डीरस्य धिया शतानि पुनरप्यन्ये रणे चोद्भटाः,
सामन्तास्तु भवेयुरित्यरियुधा मन्ये न किञ्चित्कृतम् ॥८॥

(ततः प्रविशति विमनस्क इव मन्त्री।)

मन्त्री—(सनिर्वेदम्।) जयतु जयतु महाराजः।

जय०—किं पृथ्वीराजो गृहीतो निर्गतो वा ?।

मन्त्री—स तु निर्गतः, यतो हि अस्य सामन्ता अतिसांयुगीनाः शूरतमा एकैकाधिकाश्च।

तेषामेकचरोऽस्मदीयमखिलं सैन्यं निरुन्धन् बली,
वेगाद्विद्युदिव स्फुरन् गतिविधेर्विश्वग्गतोऽबोधि सः।

सर्वैरेव रणं विधाय बहुशो वीरान्निपात्य क्षणात्,
सायं भास्करमण्डलं रणगतस्तं चाप्युपेत्याभिनत् ॥९॥
प्रत्यहं पञ्चपा एव न्यरुन्धन् ध्वजिनीं भटाः ।
तावदन्यैः स सामन्तैरगच्छत्स्वीयपत्तनम् ॥१०॥

जय०–किम् अव्रण एव निर्गतः ? संयोगिताऽपि हृता ?

मन्त्री०–( नतमुखः ) एवमेव जातम् ।

जय––( रुदन् ) ।

हा मां पराजितमुपेत्य सुहृद्गणोऽयं
राजन्यकं च मितितौ खलु लज्जयेत ।
गेहात्सुताऽप्यपहृता त्वयि विद्यमाने–
किञ्चिन्न तत्र विहितं धिगतो धिगस्तु ॥११॥

( मुमूर्षुरिव नम्रमुखः स्थितः )

( तत्र चत्वारो राजानः आगत्य तिष्ठन्ति । नतमुखो जयचन्द्रः आसन्द्यामुपविशति )

एकः–जयचन्द्र ! त्वया तु वयं बोधिता अपि न । कथमिवासौ अस्मान विजित्य अपह्रियेत् ।

द्वितीयः–यद्यस्मान् त्वम् अबोधयिष्यत्तर्हि अवश्यमेव स बद्धो हतो वा अभविष्यत् ।

जय०–लक्षाधिका सेना मदोन्मत्तगजानां, पारसीकाश्वानां च दश सहस्रमासीत्, स तु सामन्तमात्रसहाय इति कृत्वा भवन्तो न साहाय्यमानायिताः । परं स तु दैवात् अव्रण एव निर्गतः ।



तृतीयः–साहाय्यमागतेष्वपि अस्मासु स तु अवश्यमेव निरगमिष्यत् ।

यतो ह्यस्य सामन्ताः सहस्राधिकयोधिनः शूराः पराक्रमिणश्च। अस्य तु कथैव का।

पुनर्द्वितीयः–( सक्रोधम् ) लक्षयोधिनः किन्न स्युः परं वयमपि बलिनो योद्धारश्च।

पुनस्तृतीयः–भवन्तो बलिनो योद्धारश्च नेति केनोच्यते।

भवन्तः सन्तु योद्धारो जित्वरा बलिनां वराः।
परं तु सर्ववीरेषु श्रेष्ठोऽयं मन्यते भटैः॥ १२॥

चतुर्थः–अहह ! किं न श्रुतम् यदेकेनैवास्य सामन्तेन कह्नराजेन मदोद्धतः ससैनिकोऽभियातो गोरीमहम्मदो धृतः, सन्धाय मुक्तश्च।

जय०–कह्नराजप्रभृतयो बहवः सामन्ता अस्मत्सैनिकैर्हताः, इदानीं कतिचन एवास्य सामन्ता अवशिष्टाः।

पुनस्तृतीयः–इदानीं ते सन्तु मा वा। परं संयोगितायाः अपहरणसमये तु सर्वेऽप्यासन्।

पुनर्द्वितीयः–अस्मासु स्थितेषु इदमपहरणम् अस्माकमेव पराजयः, अपमानश्च।

पुनस्तृतीयः–न वयं संग्रामभूमिं गतवन्तः, किन्तु तटस्था एवास्म, इति नैवास्माकं पराजयः, नाप्यपमानः।

जयचन्द्रः–(निःश्वस्य) अहं तु यवनराजेन संधाय दुर्मदमेनं नाशयिष्ये।

चतुर्थः—जयचन्द ! किमिदं विचार्यते ! एतदवगम्यताम् यदस्यैव बलेन विदेशीयाः पराभूताः, आस्कन्नाश्च।

जय०—यूयं तटस्थाः सन्तु, अहमेनं नाशयिष्ये, ग्राहयिष्ये वा।

तृतीयः—नैतद् युज्यते अस्य नाशे ग्रहणे वा भारतं दासताम् अधिगमिष्यति।

जय०—मया सह सन्धिं स्वीकृत्य एनं विजित्य स परावर्त्स्यति।

चतुर्थः—अनेन सह तु अधुनैव कुरानसाक्षिकं सशपथं पादयोर्निपत्य सन्धिः कृतः, यदि तं दूषयित्वा अभियास्यति, दैवात् अस्य प्रमादेन वा विजेष्यते तदा स भवन्तं तु अवश्यमेव ग्रहीष्यति हनिष्यति च।

तृतीयः—किन्न श्रुतम् "न नीचो यवनात्परः" अतोऽस्य सन्धेर्न किञ्चिदपि महत्त्वम्। एवं वैरायमाणे त्वयि सर्वनाशो भविष्यति देशश्च दासतामधिगमिष्यति।

जय०—यद् भवतु तद् भवतु। अहं तु एवमेव विधास्ये।

(ततः सर्वे राजान उत्थाय खिन्नमनस्का निर्गच्छन्ति।)

(ततो निष्क्रान्ताः सर्वे।)

इति श्री सर्वतन्त्रस्वतन्त्र-विद्यावारिधि-महामहोपाध्याय-पं० मथुराप्रसाददीक्षितकृते वीरपृथ्वीराजनाटके तृतीयोऽङ्कः।

—:०:*:०:—

# चतुर्थोऽङ्कः

—*—*—*—

[ पटोन्नयनम् । ]

( विजयमहोत्सवमभिलषन्तः कतिचनसामन्ताः पृथ्वीराजश्च स्थिताः, चन्दपुण्डीरौ प्रविश्य यथास्थानमुपविशतः । )

एकः सामन्तः—मन्त्रिन् विजयमहोत्सवः क्रियताम् ।

मन्त्री—( चन्दवरदायिनं पश्यन् ) किमत्रोपयुज्यते ?

चन्दः—आः किं करणीयम् ।

काकाकह्ननरेश्वरौ विनिहतौ श्रीदेवराजो बली,
क्वैते सन्ति रघु-प्रमार-जगतः शूरः प्रसङ्गोऽपि वा ।
ख्यातौ तौ च निकुम्भराड्यदुपती स्वर्गाङ्गनाभिर्वृतौ,
सामन्तैरहितेव वोऽद्य विधुरा संसत्परिज्ञायते ॥१॥

चतुःषष्टिस्तु सामन्ताः सखायो वो रणे हताः ।
सर्वनाशेऽपि संजाते सुखं किमनुभूयते ॥२॥

पृथ्वी०—(धैर्यं विमुच्य) हा काहाकह्न ! ममैकप्राण ! हा महम्मदगौरीमद-विचूर्णक ! मां विहाय क्व गतः । हा सहस्रयोधिन् ! देवराज ! हा निकुम्भरघुपती ! हा देवराज ! हा जगत्पते ! भवन्तः क्वासते ? अद्य भवद्भिर्विरहिता परिषत् शून्येव प्रतिभाति । किमेतन्मया कृतम् । ( इति वस्त्रेण मुखमाच्छाद्य रोदिति । ततः सर्वेऽपि रुदन्ति । पृथ्वीराजः मुखमाच्छाद्य जवनिकायां प्रविष्टः । )

पुण्डीरः—( साश्रुः ) चन्द ! किमतः परं विधेयम् ?

चन्दः—( अश्रूणि प्रमृज्य ) अत्र न कश्चिदपि परामर्शः कर्तव्यः, किन्तु वीरगतिमापन्नानां दायादान् आहूय संमान्य च तेषां स्थाने ते विधेयाः ।

धीरपुण्डीरः—साधु-युक्तं तु उच्यते । एवमस्माकं सामन्तानां षडधिकशतसंख्या पूर्णा भविष्यति ।

चामुण्डः—

संख्यापूर्त्यैव न प्रयोजनम्, किंतु तादृक् शौर्यमप्यपेक्षितम् ।

मृगेन्द्ररूपेण पिनद्धविग्रहः सटाच्छटाभिश्च परिष्कृतो बुधैः
महापदस्थो विहितोऽपि कुक्कुरो मृगेन्द्रकार्यं नु विधास्यते कथम् ॥

चन्दः—अत्र मा विचार्यताम् । यतो हि—

परिस्फुरद्विग्रहशौर्यशालिनीं
रिपोः क्षये सत्वरताविधायिनीम् ।
मदुक्तिमाकर्ण्य रणस्थलीं गतो,
दृढं स कण्ठत्वमुपैष्यति क्षणात् ॥४॥

चामु०—यथा भवद्भ्यो रोचते तथा विधीयताम् । परं तु न मे भावि शुभलक्षणं प्रतीयते ।

( ततो निर्गच्छन्ति पुण्डरीकप्रभृतयः )

[ पटोन्नयनम् ]

( चन्दचामुण्डौ परिषदि प्रविशतः )

चन्दः—चामुण्ड ! इदानीं पृथ्वीराजः परिषदि नागच्छति । एतदवलोक्य बहवः सामन्ताः स्वस्वगृहं व्रजन्ति, दिल्लीं परित्यजन्ति च । रणाङ्गण निहतानां दायादेभ्य ... राजानमनागतं ... ते ।

चामुण्डः—किं विधेयम् । सर्वं विशृंखलितमिव प्रतीयते । लाभपुर-पत्तनस्थो धीरपुण्डीरोऽपि स्वतन्त्रो जातः । उद्घोषितं च तेन 'नाहं पृथ्वीराजस्यानुवर्ती, किन्तु स्वतन्त्र एवेति' चारेणागत्य अद्यैवोक्तम् ।

( ततः प्रविशतः बलभद्रप्रसङ्गराजौ । आगत्य समीपमेवोपविशतः । )

चन्दः—इदानीं हाहुलीराजो नागच्छति ।

बलभद्रः—किन्तु न श्रुतम्, यत् सर्वसामन्तान् निन्दतस्तस्य दौरात्म्यमवलोक्य महाराजेन सर्वसमक्षमेव स भर्त्सितः, तदनन्तरमेव समुत्थाय किञ्चिदुक्त्वा च परिषदो निर्गतः, सपरिवारो गेहं गतश्च ।

चन्दः—किं तत्रत्यः कोऽपि समाचारः समुपलब्धः ? ।

चामुण्डः—सर्वमुपलब्धम् ( सनिर्वेदम्, सोच्छ्वासं च )
इदानीं महम्मदगौरीम् अभियातुं प्रोत्साहयति, अत्रत्यं सर्वमपि वृत्तम् एवं विवृत्य प्रेषयति येन त्वरितमेव सः अभिषेणयेत् ।

चन्दः—बलभद्र ! किमत्र विधेयम्, येन सुसंबद्धा परिषद् भवेत् ।

बल०—चामुण्डराज ! गौरीमहम्मदेन किमुत्तरितम् । अत्रांशे किमप्युपलब्धम् ?

चामु०—स तु भवद्भ्यो बिभेति, बहुषु सामन्तेषु दिल्लीं परित्यज्य गतेष्वपि स्वल्पानेव युष्मान् अत्यधिकं मन्यते ।

चन्दः—

सन्धिं विदूष्य भेदान्नः सोऽभियास्यति दुर्मतिः ।
इति मे भासते यस्मान्मिथ्याभाषी युयुत्सुकः ॥६॥

प्रसङ्गराजः—आः महादुष्टात्माऽसौ, यो हि निष्कारणमेव सन्धिं विदूषयिष्यति ।

चन्दः—अथ किम्, साम्राज्याभिलिप्सयाऽसौ अकरणीयमपि सर्वं करोति ।

पश्य—

युयुत्सुर्भेदमस्माकं प्रजानां चापि दुर्मतिम् ।
प्रमादं सैन्यसैथिल्य-मौत्सुक्यात्स प्रतीक्षते ॥७॥

चामुण्डः—इदं तु तस्य विदितमेव, यन्मन्त्री कैमासो राज्ञोऽन्तः पुरे केनापि हतः, अस्माकं चतुःषष्टिः सामन्ता हताः, धीरपुण्डीरोऽपि निर्गत्य स्वस्वातन्त्र्यमुद्घोषितवान्, हाहुलीरायोऽस्मद्भ्यो विरुध्य तस्यैव पक्षमाश्रितः, इत्यवश्यं निर्भयो भूत्वा अभियास्यति ।

बलभद्रः—तथापि भवतां शौर्यमवगत्य हृदा वेपते, अहं मन्ये साहसं विधातुं नैव समीहिष्यते ।

चन्दः—इदं सर्वं सत्यम्, परं यदि अस्माकं प्रभुः पृथ्वीराजः अधुनाऽपि सचेष्टो नैव भविष्यति, प्रमदासक्तिं नैव त्यक्ष्यति तदा तस्याभियानम् अस्माकं नाशश्च निश्चितमेव ।

यतो हि—

विद्वेषदुर्गन्धकषायितस्व-मीर्ष्याकुलं राज्यमदप्रमत्तम् ।
रामासु रक्तं विषयेषु सक्तं विभिन्नचक्रं विजहाति पद्मा ॥८॥

प्रसङ्गराजः—सर्वमेवमेतत्, अतो महाराज उद्बोधयितव्यः ।

चन्दः—ओम्, एवमेव विधीयताम् ।

( ततो निर्गच्छन्ति चामुण्डराजप्रभृतयः । ]

[ पटोन्नयनम् । ]

( इञ्छिनी राज्ञी पृथ्वीराजसविधे आसीना, काचिद्दासी च तत्र स्थिता )

दासी—महाराय ! इयाणिं चामुण्डो तुमे णिंदइ । लोएसु कहेइ, राया इत्थियाए आसत्तो, पडिक्खणं संजोगिआए मुहं णिरिक्खइ ।
[ महाराज ! इदानीं चामुण्डस्त्वां निन्दति । लोकेषु कथयति राजा 'स्त्रियामासक्तः प्रतिक्षणं संयोगितायाः मुखं निरीक्षते इति,']

( पृथ्वीराजः क्रुद्धः सन् किमपि चिन्तयति। ततः प्रविशति रुदन् रैनसी राजकुमारः। )

कुमारः—तात ! मम हस्ती चामुण्डेन निहतः।

पृथ्वी०—कुमार ! मा रोदीः अहमेनं दण्डयामि। दासि ज्ञायताम्, कुत एतत्कृतम्, ( सा बहिर्गच्छति। )

राज्ञि ! कुमारस्य परमप्रियः, अनिर्वचनीयप्रभावश्च स आसीत्, चामुण्डस्तं निहत्य नोचितमकार्षीत्।

राज्ञी—( मनसि ) सपत्न्याः आनयने अयं प्रधानसहायक आसीदित्येनं दण्डयामि, ( प्रकाशम् )

अथ किम्, स इदानीं परमोद्धतः संजातः। ( ततः प्रविशति दासी )

दासी—एगम्मि मग्गे पुव्वदो हत्थी आगदो, अपरदो चामुंडो। लोगेहिं पलाअणत्थं उत्तम्। परं सो सगव्वं अम्हे छत्तिअत्ति कहिऊण पिट्ठं अदंसमाणो जुज्झिऊण अहंसी।

[ एकस्मिन् मार्गे पूर्वतः हस्ती आगतः, अपरतश्चामुण्डः, लोकैः पलायनार्थमुक्तम्, परं स सगर्वं वयं क्षत्रिया इत्युक्त्वा पृष्ठमदर्शयन् युद्ध्वा अवधीत् ]

रैनसी कुमारः—तात ! अस्माकं हस्ती कुतो मारितः ?।

पृथ्वी०—मा रोदीः, अहमेनं दण्डयामि।

मदोद्धतोऽसौ चामुण्डो जातो न्यायविवर्जितः।
कारागारे ततश्चैष निगडीक्रियतां चिरम् ॥८॥

[ पटोन्नयनम्। ]

( इति कारागाराधिपतिसविधे लिखित्वा आज्ञापत्रं प्रेषयति, स च चामुण्डं राजाज्ञां श्रावयित्वा तं कारागारे नयति। चन्दबलभद्रप्रसंगराजा आगत्य निरीक्षन्ते। )

प्रसङ्गराजः—आः राज्ञा किमिदं विधीयते। अहं राजाज्ञां विरोध्य हठादेनं मोचयामि ( इति हठात् तं मोचयति। )

चामुण्डः—मित्र ! मैवं कार्षीः, एवं प्रजासु विद्रोहो भविष्यति। अहं यथेच्छं गच्छामि। सुखेन निगडीभूय निवत्स्यामि च।

प्रसङ्गः—बलभद्र ! पृथ्वीराजो मदान्ध एव संजातः।

बल०—स तु कामान्धो बुद्धिशून्यश्च संजातः, यदेवं विधीयते।

प्रसङ्गः—चन्द ! किमिदं राजा चिकीर्षते, कथमेवं देशरक्षा भविष्यति, समिद्धं शत्रोरभियानं को निरोत्स्यति, वयमिदानीं स्वल्पा एव सामन्ताः इहस्थाः, अन्ये राज्ञ औदासीन्यमवगत्य यथावसरं गेहं गताः।

चन्दः—आगच्छत, वयं रामगुरुम् अन्तःपुरं प्रेष्य राजानम् उद्बोधयामः।

( ततः सर्वे निर्गच्छन्ति। )

पटाक्षेपः

इति श्री सर्वतन्त्रस्वतन्त्र-विद्यावारिधि-महामहोपाध्याय—

पं० मथुराप्रसाददीक्षितकृते वीरपृथ्वीराज-

नाटके चतुर्थोऽङ्कः।

———

# पञ्चमोऽङ्कः

—:-o-:—

[ पटोन्नयनम् । ]

( जयचन्दः महम्मदं गौरीमानेतुं दूतं प्रेषयति । )

जय०—दूत ! तत्र गत्वा इदं पत्रं दातव्यम्, वक्तव्यं च ।

काकाकह्लप्रभृतयश्चतुःषष्टी रणे हताः ।
चामुण्डो निगडीभूतः स्वस्वगेहं गताः परे ॥१॥

इदमपरं वक्तव्यम्, संयोगितायामासक्तेः सामन्तशून्या परिषद् विनष्टा । हाहुलीरायोऽपि एतद्विरुद्ध एव संजातः । संभावयामि त्वामुपगच्छति, भवत्सहायको भूत्वा अनेन सह योत्स्यते । धोर-पुण्डीरोऽपि लाभपुर (लाहोर) पत्तनस्थः स्वस्य स्वातन्त्र्यमुद्घोषयत् । अपरान् आगच्छतः सहायकान् सानुनयं वयं प्रतिरोत्स्यामः ।

अतश्च—

ससैन्यमभियातव्यं निगडीक्रियतामसौ ।
आर्यदेशेऽत्र साम्राज्यं चिरं चर सुखी भव ॥२॥

( ततः प्रविशति मन्त्री । )

मन्त्री—कुत्रासौ दूतः प्रेष्यते ?

जय०—दिल्लीमभियापयितुं गौरीमहम्मदसविधे ।

मन्त्री—अनार्यमाचर्यते, वयं सर्वेऽपि आर्यधर्मावलम्बिनः, पृथ्वीराजस्तु-आत्मीय एव, स चेदानीं शत्रुः सन्नपि आवुत्तकल्प एव ।

जय—स तु मया विनाशयितव्य एव ।

मन्त्री—यदि स प्रमादादिदानीं सामन्तरहितः पराजितो विनष्टो वा भविष्यति तदा निश्चितमयं यवनस्त्वय्यपि अनार्यमनिर्वचनीयम् आचरिष्यति । किन्तु न श्रुतम् "न नीचो यवनात्परः" । अथेदानीमनार्याणामाक्रमणं पृथ्वीराजभियैव प्रतिरुद्धम् ।

जय०—मया सह तेन सन्धिः कृतः ।

मन्त्री—पृथ्वीराजेन साकं तु स पराजितो निबद्धः सन् स्वधर्मग्रन्थं कुरानं साक्षीकृत्य सन्धिमकार्षीत् । यदि तं विदूष्य आक्रमिष्यति तदा भवन्तं स्वातन्त्र्यकण्टकं मत्वा अवश्यमेव ग्रहीष्यति, अनिर्वचनीयं वा आचरिष्यति ।

जय०—यद् भवतु तद् भवतु । मया तु आहूयते एव ।

( मन्त्री उत्थाय अप्रणम्यैव सनिःश्वासं निर्गच्छति । )

दूत ! गच्छ, मदुक्तम् आचर । निसृष्टार्थ[1] दूतनीत्या कार्यं साधय ।

[ पटोन्नयनम् । ]

( महम्मदो गौरी स्वमन्त्रिणा परामृषति । )

गौरी—तातार ! मन्त्रिन् ! इदानीं पृथ्वीराजस्योपरि आक्रम्यताम् ।

मन्त्री—स तु मृत्युभयशून्यैः सहस्रयोद्धृभिश्चामुण्डराजप्रभृतिभिर्भटैः सुसङ्गतो दुर्जय एव ।

( गौरीमहम्मदो शोकमुद्रया स्थितः सन् किञ्चिद् विचारयति, ततः प्रविशति द्वारपालः । )

---

(१) उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः ॥

द्वार०—जेदु जेदु देओ [ जयतु जयतु देवः ]

गौरी—किमस्ति ।

द्वार—जयचन्ददूओ आगओ । [ जयचन्द्रदूत आगतः ]

गौरी—प्रवेशय ।

( द्वारपालः प्रवेश्य निर्गच्छति, स तं मञ्चे उपवेशयति । )

गौरी—( दूतोन्मुखं पश्यन् ) कथय, अस्ति जयचन्द्रस्य कुशलम् ? ।

दूतः—( उत्थाय पत्रं ददाति, वक्ति च । ) इदं सविशेषं राज्ञा उक्तम्, यत् निःशङ्कं भवद्भिरभियातव्यम्, अहं सर्वथा भवत्सहायको भूत्वा सफलं वः कार्यं संपादयिष्यामि ।

गौरी—(पत्रं गृहीत्वा मनसि वाचयित्वा च मन्त्रिणं ददाति । )

मन्त्री—( मनसि वाचयति । महम्मदं गौरीं पश्यन् ) अतः परं किं विचार्यते । यतो हि—

यदा रिपुं ग्लानिगतं विलोकयेत् स्वकं समृद्धं बलिनं विभावयेत् ।
तदाऽभियायाद् बलवीर्यसंगतः कवेरियं नीतिरशेषसंमता ॥३॥

गौरी—( सहर्षं सोत्साहं च । )

गाह्यन्तामरिपत्तनानि परितः संग्रामशूरैर्भटैः
गृह्यन्तां रणमत्तसैनिकदलैः विश्वग् रिपोर्बान्धवाः ।
दाह्यन्तां परिपन्थिदुर्गभवनोद्यानानि, सैन्याधिपैः
मा यासीच्च पलायितः क्वचिदपि स्थाने स दिल्लीपतिः ॥४॥

मन्त्री—स तु रणोन्मत्तः क्षत्रियवरो न पलायिष्यते,

गौरी—कदाचिदुद्विग्नः पलायताम्,

मन्त्री–( स्मित्वा ) किन्न श्रुतम्, महाभारते अष्टादश अक्षौहिण्यः समवेताः, तत्र कोऽपि न पलायितः। दुर्योधनः नवनवतिभ्रातॄणां विनाशेऽपि एकाकी सन्नपि न सन्धिमकार्षीत्। धर्मैकप्राणाना-मार्याणां धर्म एवैषः, यद् "न दैन्यं न पलायनम्"

गौरी—(शोकमुद्रया स्थितः किञ्चित् विचारति।)

मन्त्री—( अवगत्य ) अलमत्र विचारेण, शौर्यधुरंधरा भवतां सैनिका-श्चापि धर्मैकप्राणाः।

गौरी—( सहर्षम् ) तर्हि अलं विलम्बेन सज्जीभूयताम् ( इत्युक्त्वा। निर्गच्छति। )

[ पटोन्नयनम् ]

( चन्द्रामगुरुबलभद्रप्रभृतय आसने उपविष्टाः किमपि विचारयन्ति। ततः समरसिंहः प्रविश्य तत्रैवोपविशति। ) 'जयो योगमायायाः' इति परस्परं कथयन्ति।

समरसिंहः–पृथ्वीराजः क्व ?

चन्दः—स तु बहुकालादन्तःपुरादेव नागच्छति।

समर०—शत्रुराक्रममाणो लाभपुर (लाहोर) प्रान्तमुपगतः, स तु नाद्यापि बहिरागच्छति। भवद्भिरपि न किमपि कृतम् ?

चन्दः—बहुंवारं पत्रं प्रेषितम्, तदभियानमपि बोधितम्, परं तु स किञ्चिदपि नोत्तरयति, नापि बहिरागच्छति।

समर०—( विमृश्य ) संभाव्यते त्वत्पत्रमेव तं नोपगच्छति, अस्तु। सर्वे सामन्ताः क्व ?

चन्दः—काकाकहप्रभृतयः चतुःषष्टिः सामन्ताः संयोगितायाः हरणे रणाङ्गणे एव अप्सराभिर्वृताः, अपरे आहूतमपि अन्तःपुरादनागच्छन्तं विषयासक्तं तमवगत्य यथावसरं स्वस्वगेहं गताः,पुनरपि बहवोऽ

वशिष्टा आसन् । परं चामुण्डराजं निगडीकृतं विलोक्य महाराजं निन्दन्तस्तेऽपि स्वस्वदेशं गताः । इदानीं पञ्चषा एव वयमत्र स्थिताः ।

समर०—किं चामुण्डराजोऽपि निगडीकृतः ?,

चन्दः—आम् !

समर०—आः ज्ञायते अतिविषयासक्त्या पृथ्वीराजो बुद्धिशून्य एव संजातः । अस्तु । भवान् रामगुरुणा सह तत्र गत्वा तस्मै इदं पत्रं प्रयच्छतु । दासीभिः प्रतिरोधे कृतेऽपि सर्वा अप्यवमत्य हठाद् युवाम् गच्छेतम् । ( इति पत्रं लिखित्वा सर्वान् श्रावयति । )

गौरीमहम्मदो वेगात् आक्रामन् परिवर्द्धते ।
कथाशेषममुं नीत्वा प्रजायाः पालनं कुरु ॥५॥

इति भवदीयः समरसिंहः ।

सर्वे—साधु साधु ( चन्दः पत्रं गृहीत्वा रामगुरुणा सह निष्क्रामति । )

[ पटोन्नयनम् । ]

( उभौ हठाद् अन्तःपुरे प्रविशतः, दासी प्रतिरुध्य आक्रोशति । )

दासी—धाव धाव । पुरिसा अन्तेउरे पविसन्ति ।

[ धावत धावत पुरुषा अन्तःपुरे प्रविशन्ति ]

इच्छिनी—आः क इमे दुरात्मानः अनार्यं चिकीर्षन्ति ।

( इति कथयन्ती प्रविशति । प्रविश्य चन्दं रामगुरुं च दृष्ट्वा सलज्जम् )

गुरो ! अहमभिवादये ।

गुरुः—आयुष्मती सदा सौभाग्यवती च भव ।

चन्द:—

महाराज्ञि ! चिरं जीव, सौख्यसौभाग्यभाग् भवेः ।
समूलं शत्रुसंहारे पत्युः साहाय्यमाचरेः ॥६॥

इञ्छिनी—भवतामादेशात् सन्नद्धाऽस्मि, किमाज्ञापयन्ति भवन्तः ।

चन्द:—इदं पत्रं महाराजसमीपं नयत । वक्तव्यं च । दुरात्मा यवनराजो गौरोमहम्मदः सन्धिं विदूष्य अभ्यागच्छति, तमवरोद्धुं समरसिंहः समायातः, वयं च संनद्धाः स्म इति त्वरितमेव परिषदि समुपतिष्ठत ।

[ पटोन्नयनम् । ]

( पृथ्वीराजः संयोगितासविधे स्थितः इञ्छिनी प्रविश्य तस्मै पत्रं ददाति । )

इञ्छिनी—चन्दरामगुरुप्रभृतयो भवन्तं परिषदि आगन्तुं प्रेरयन्ति । समरसिंहोऽपि साहाय्याय समायातः, अलमिदानीं विलम्बेन ।

पृथ्वी०—( पत्रं गृहीत्वा मनसि वाचयित्वा च ) अहमेष गच्छामि ।

( इञ्छिनी निर्गच्छति )

संयो०—स्वामिन् ! किमेषा कथयति ? ।

पृथ्वी०—( साधिक्षेपम् ) शूरम्मन्या भट्टब्राह्मणा अपि राज्यं रक्षिष्यन्ति । अहं गच्छामि, यतो हि आवुत्तः समरसिंहः अभिगच्छन्तं यवनराजं रोद्धुं समायातः ।

संयो०—( प्रतिरोध्य ) मया तु शयनाशनादिः सर्वोऽपि तस्य प्रबन्धः कृतः ।

पृथ्वी०—( स्मित्वा ) नायं भोजनभटः, किन्तु समरभटः, प्राणपणेन शत्रुं रोद्धुं नाशयितुं च समायातः, इति तदर्थं परिषत् क्रियते, अहमपि तत्रैव गच्छामि ।

संयो०—प्राणनाथ ! पुनः कदा आगमिष्यसि । ( स अशृण्वन्नेव निर्गच्छति । )

[ पटोन्नयनम् । ]

( परिषदि समरसिंहप्रभृतयः स्थिताः पृथ्वीराजः प्रविश्य समरसिंहं वक्षसा आलिङ्गति, उभौ परस्परमालिङ्गतः । सर्वे यथास्थानस्थिताः पृथ्वीराजं प्रणम्य जयो योगमयाया इत्युक्त्वा उपविशन्ति । )

पृथ्वीराजः—( सर्वतो दृष्ट्वा ) अन्ये सामन्ताः क्व ?

चन्दः—परिषदि अनागच्छन्तं विषयासक्तं भवन्तमवगत्य कतिचन स्वगेहं गताः, परं चामुण्डराजं निगडीकृतमवलोक्य प्रायः सर्वे एव गताः, इदानीम् एते पञ्चषा एवावशिष्टाः ।

समर०—पृथ्वीराज ! चामुण्डोऽपि निगडितः इति किं त्वया कृतम् ।

पृथ्वीराजः—न जाने कुतस्तदानीं बुद्धौ पाषाणः पतितः ( इति खिन्नमनस्कः किमपि चिन्तयति )

चन्दः—( अनुत्साहिनं तमवगत्य ) राजन् ? अलं विचारेण ।

शूराः शत्रुगणास्त्वया विनिहताः संयोगिता चाहृता,
इच्छन्ती जयचन्द्रराजतनया युद्ध्वैव नीता गृहम् ॥
यः प्राग् म्लेच्छपती रणाङ्गणगतो बध्वा च मुक्तः पुनः,
सोऽयं त्वामभियाति तं नय यमस्यावासमेव द्रुतम् ॥७॥

पृथ्वीराजः—कोऽयं वराकः, कियती वाऽस्य सेना, चामुण्डराजप्रभृतय एव सर्वान् नाशयिष्यन्ति ( घण्टिकां वादयति । दौवारिकः प्रविश्य )

दौवा—जेदु २ देवो । [ जयतु २ देवः )

पृथ्वी०—कारागाराधिपतिमानय ।

दौवा०—जहा आणवेदि देवो ( यथाऽऽज्ञापयति देवः ) ( इति आनेतुं निर्गच्छति )

पृथ्वी०—समरसिंह ! अहमस्मिन् युद्धे एनं गौरीं कथावशेषमेव नेष्ये ।

समर०—एवं कृते एव सौख्यं प्रजाया रक्षणं च । ( ततः प्रविशति कारागाराधिपतिः । )

पृथ्वी०—राष्ट्रपाल ! चामुण्डराजं मुञ्च ।

राष्ट्र०—यथाऽऽज्ञापयति देवः ( इति जिगमिषति । )

पृथ्वीराजः—अथवा राष्ट्रपाल ! त्वं तिष्ठ, अहमेव गत्वा मोच्यामि ।

समर०—साधु साधु, इदमेव युक्तम् ( इति चन्दप्रभृतयः सर्वे प्रशंसन्ति । )

( स उत्थाय निर्गच्छति, सहैव समरसिंहचन्दप्रभृतयश्च । )

[ पटोन्नयनम् ]

( पृथ्वीराजप्रभृतयः सर्वे प्रविशन्ति । स पृथ्वीराजमागच्छन्तमवगत्य पराङ्मुखस्तिष्ठति ।)

पृथ्वी०—( संमुखमुपेत्य-साश्रुः करबद्धश्च बन्धं छित्त्वा ) मित्र ! न जाने, तदानीं मे बुद्धौ कुत इयं पाषाणशिला निपतिता । भवितव्यतैवात्र कारणम्, क्षमस्व माम् । समरसहायको भूत्वा सज्जो भव । चामुण्डराज ! पश्य समरसिंहस्त्वां सस्नेहं निरीक्षते ।

चन्दः—चामुण्डराज !

दुष्टो घग्घरसंगरे यवनराड् बद्ध्वा त्वयैवाहृतो,
भूपालाः करदीकृताश्च शतशो जित्वा त्वयैवाहवे ।
आखेटेऽपि च सिंहसैरिभगणा नीतास्त्वयैव क्षयं,
तत्किं कातरतामिवाद्य कुरुषे श्रुत्वाऽभियान्तं रिपुम् ॥८॥

पश्य, महाराजाधिपस्त्वां सविनयमनुनयते ।

चामुण्डराजः—( साश्रुः उत्थाय, पृथ्वीराजमालिङ्गति । पृथ्वीराजोऽपि तमालिङ्गति, इति परस्परमालिङ्गतः । पृथ्वीराजः एकम्

असिं तत्कटौ बद्ध्वा अपरं तद्हस्ते ददाति। केसरवर्णमुष्णीषं च तच्छिरसि स्वयं बध्नाति। चामुण्डराजः सुप्रसन्नः सन्, समरसिंहं प्रणिपत्य वक्षसाऽऽलिङ्गति। उभौ परस्परमालिङ्गतः। पुनः पृथग् भूत्वा सर्वान् पश्यन्) जयो योगमायायाः।

चामुण्डराजः—मया तु सन्धिसमय एवोक्तम् "गूढ़पाम्लेच्छराजोऽसौ काले समभियास्यति।)

चन्दः—यच्छङ्कितं तदेवासीत्। (एवं परस्परं वदन्तः परिषदं गच्छन्ति।)

[ पटोन्नयनम् ]

( सर्वे यथास्थानमुपविशन्ति। )

चामुण्डराजः—( सर्वतोऽवलोक्य। ) अपरे सामन्ताः क्व ?

प्रसङ्गराजः—धीरपुण्डीरस्तु विरुध्य लाभपुरे स्वं स्वतन्त्रं घोषितवान्, हाहुलीरायोऽपि गतः। इदानीम् इदमपि श्रूयते, यत् स गौरीमहम्मदेन सह संयुज्य अभिषेणयितुम् अभिलषति।

पृथ्वी०—आः किम्, सोऽपि विरुद्ध एव संजातः ?

प्रसङ्ग०—अथ किम्।

चामुण्डः—स तु महाकृतघ्नः, राज्ञ उपकृतिमपि न स्मरति। यद् इयति महत्तमे राज्ये स्थापितः, सुरक्षितं च तद् राज्यम्। मशकप्रायस्यास्य नाशे को नाम परिश्रमः स्यात्।

चन्दः—नहि नहि, स तु महाबलिष्ठः; सहस्रयोधी च॥ संयोगिताहरण-युद्धेऽनेन अनिर्वचनीयं युद्धकौशलं शौर्यं च प्रकटितम्।

बलभद्रः—स कातरो दुर्बलश्चेति न केनाप्युच्यते, परं महाराजेन सह विरोधे तु मशकप्राय एव।

(पृथ्वीराजः सोच्छ्वासं किमपि चिन्तयति । ततः सहसा प्रविशति धीरपुण्डीरः)

धीरपु०—( प्रविश्य राज्ञश्चरणयोर्निपतति । ) क्षमस्व ममापराधम् ।

पृथ्वी०—उत्तिष्ठ मित्र । उत्तिष्ठ । ( स उत्थाय यथास्थानमुपविशति । )

धीरपु०—( सर्वान् प्रणमन् ) जयो योगमायायाः ।

सर्वे—जयो य.गमायायाः ।

पृथ्वी०—वीराग्रणीर्मर्दितशत्रुसैन्यस्त्वं सांयुगीनोऽसि गतेर्विधिज्ञः ।
स्वयं प्रपन्नश्च सहायभावात्तस्मान्मतो मे कुरु शत्रुनाशम् ॥९॥

धीरपु०—अहं सर्वथा सन्नद्धोऽस्मि ।

( ततः प्रविशन्ति द्वित्राः सामन्ताः, प्रविश्य पृथ्वीराजं प्रणम्य सर्वतोऽवलोक्य च यथास्थानमुपविशन्ति । )

सामन्ताः—जयो योगमायायाः ।

सर्वे—जयो योगमायायाः ।

एकः सामन्तः—इदं तावद् विचार्यताम्, सन्धिः क्रियताम्, उत युद्धं वा ?

चामुण्डः—आः कोऽयं सन्धेरवसरः, स स्वेनैव कृतं सन्धिम् उद्दूष्य विघटितान्, अस्मानवमत्य देशद्रोहिणा जयचन्द्रेणोत्साहितश्चाभिषेणयमाणो लाभपुरपत्तनादभ्यग्रे समायातः ।

द्वि० सामन्तः—अत एव तु मन्यते, नायं युद्धस्यावसरः । वयमिदानीं स्वल्पा एव स्मः । किञ्चित्समयाय संनाहाय संधीयताम् ।

धीर पुं०—किं न श्रुतम् "न नीचो यवनात्परः" सन्धिप्रार्थनयाऽपि सर्वस्वमेवापहरिष्यति । युद्धस्यायोग्यांश्च अस्मान् विचारयिष्यति असह्यमेव सन्धौ कार्यं स्थापयिष्यति ।

पुनःद्वि० सामन्तः—सर्वमेवास्य दौरात्म्यात्प्रतीयते, परं का गतिरन्या ॥

समरसिंहः—( स्मित्वा )

प्राणाः किन्तु सखे ! श्रुताः स्थिरतरा येषां कृते भीरुतां
धत्से स्वे हृदयेऽल्पजीवनधिया दास्यं च धिग् मन्यसे ।
धर्मं रक्ष निहत्य शत्रुमचिरात् सौख्येन रक्ष प्रजाः
यद्वा स्याः समराङ्गणे विनिहतः सूर्यं विभिद्यात्मगः ॥१०॥

धोर पुण्डी०—

जीविष्यामः सुखेनैव नैवं कुक्कुरजीवनम् ।
युद्धे मृता वा ससुखं स्थास्यामो ब्रह्ममन्दिरे ॥११॥

प्रसङ्गराजः—( सगर्वम् )

शत्रुसैन्ये विधास्यामः शतशोऽसृग्महानदीः ।
कांदिशीका भविष्यन्ति विह्वला रिपवो रणे ॥१२॥

चामुण्डराजः—

द्विपत्संहारसुपटु-र्मम कौक्षेयकः क्षणात् ।
शत्रुशोणितपानेन स्वां तृषं क्ष्मापयिष्यति ॥ १३ ॥

( इति खड्गं स्पृशन् वीरासनेन तिष्ठति )

पृथ्वी०—( सुप्रसन्नः सन् ) अहमेष सज्जीभूय आयोधनभूमौ आगच्छामि, भवद्भिरपि सज्जीभूय तत्रैवागन्तव्यम् । (इति जिगमिषति )

चन्दः—राजन् अहं हाहुलीरायं प्रतिबोध्य समुत्साह्य च आनेतुं जिगमिषामि, ।

पृथ्वी०—यथा भवद्भ्यो रोचते ।

( ततो निष्क्रान्ताः सर्वे । )

इति श्री सर्वतन्त्रस्वतन्त्र-विद्यावारिधि-महामहोपाध्याय-
पं० मथुराप्रसाददीक्षितकृते वीरपृथ्वीराज-
नाटके पञ्चमोऽङ्कः ।

---

# षष्ठोऽङ्कः

—*—*—

[ पटोन्नयनम् ।]

( आयोधनभूमौ पृथ्वीराजेन सहिताः सर्वे सामन्ताः स्थिताः । )

चारः—( प्रविश्य ) महाराज ! भवतः साहाय्याय आगच्छतः कतिचन सामन्तान् मार्गे एव जयचन्द्रः उपेत्य प्रणिपत्य च सानुरोधं प्रत्यरुधत् । अथापि आगच्छतो द्विशान् सशपथं पादग्राहं प्रत्यरौत्सीत् ।

पृथ्वी०—(निःश्वस्य) फलमस्य स्वयमुपभोक्ष्यसे । ( समरसिंहोन्मुखं गत्वा च )

सैन्याधिपत्ये त्वामेष युद्धेऽस्मिन्नभिषेचये ।
सर्वे चैते त्वदायत्ताः स्वेच्छयेमान्नियोजयेः ॥१॥

सर्वे—( असिं निष्काश्य ) वयं सर्वे संनद्धाः, त्वदाज्ञापालकाश्च ।

सम०—तथास्तु । अहं सर्वं संपादये ।

पुनरपरश्चारः ( प्रविश्य प्रणम्य च ) महाराज ! चन्देन बहु प्रतिबोधितोऽपि हाहुलीरायो न किञ्चिदपि अमन्यत, प्रत्युत गौरीमहम्मदस्य पृष्ठचरो भूत्वा भवद्भिः सह योद्धुमेवागच्छति ।

पृथ्वी०—( रक्तेक्षणः ) दुरात्मा महाकृतघ्नोऽयम् ।

धीरपुण्डीरः—( पृथ्वीराजोन्मुखं गत्वा ) महाराज !

गौरीमहम्मदशिरश्छेत्तुं समभिकांक्षये ।
सर्वतो रक्ष्यमाणं तच्छित्वा त्वत्पादयोर्नये ॥२॥

पृथ्वी०—स तु मया हन्तुं प्रतिज्ञातः इति तं तु अहमेव हनिष्यामि ।

परमिदानीं तत्स्थानीयो हाहुलीरायः संजातः, आगन्तुकत्वात्स- वैरपि तातारप्रभृतिभिः प्राणपणेन रक्ष्यते । इति तस्य शिरश्छित्वा आनीयताम् । अहं गौरीमहम्मदस्य शिरश्छेदाद- धिकतरमेतच्छिरश्छेदं मन्ये ।

धीर०—यथा आज्ञापयति महाराजः ।

चामुण्डः—अहं भवत्सहायकत्वे संनद्धोऽस्मि ।

धीर०—एषा भवतां महती कृपा, परमिदानीं नास्त्यावश्यकता । द्वार- स्थितोऽस्मद्भ्राता एव पर्याप्तः ( इति असिं कुक्षौ दधानः शूलं भ्रामयंश्चलितः, पश्चात्तद्भ्राता च चलितः ) ।

समर०—अद्य गरुडव्यूहं विरच्य युध्यताम् ।

चामुण्डः—यथा भवतामाज्ञा ।

[ पटोन्नयनम् ।]

( गौरीमहम्मदस्तातारेण मन्त्रिणा सह परामृषति ।)

गौरी०—मन्त्रिन् ! समरसिंहो महाबलिष्ठः काकाकह्वादप्यधिकतरः शूरो दशसहस्रयोधीव प्रतीयते ।

तातारः—अथ किम् ! पश्य ।

सिंहो यथा हरिणयूथविदारदक्षो
वह्निः समीरणसखो विपिनस्य हर्ता ।
भीमश्च कौरवकुलस्य विलोपकर्ता
तद्वद् विनाशयति मे ध्वजिनीं स चैकः ॥ ३ ॥

गौरी०—( खिन्नः सन् ) आः मन्त्रिन् ! पश्य । चामुण्डप्रभृतिभिः आस्क- न्द्यमानाः सर्वेऽपि मे सैनिकाः पलायन्ते ।

पश्य पश्य-चामुण्डः प्रलयं कर्तुमुद्युक्तो रुद्र इव प्रतीयते, अन्येऽपि सामन्ताः मम सैन्यं नाशयन्तः इत एवाभिसरन्ति। एहि। आवां निह्नूय स्थास्यावः। ( इति, उभौ निह्नुतः। )

सामन्ताः—विशृङ्खलितमस्य सैन्यम्, सर्वेऽपि पलायिताः। शून्यमिदं रणस्थलं जातम्, जितमस्माभिः, ( इति परामृषन्तो विजय-वैजयन्तीमारोपयन्ति। ) ततः—धीरपुण्डीरः ( आगत्य, शूले विद्धं हाहुलीरायशिरः पृथ्वीराजचरणयोर्निपातयति। )

पृथ्वी—साधु पुण्डीर ! साधु। त्वं महावीर इव महावीरः, काकाकह्ला-दन्यून एव मद्बाहुरिवासि।

सर्वे सामन्ताः—पुण्डीर ! सम्यक् कृतम्, साधु जातम्।

चामुण्डः—भ्राता क्व ?।

पुण्डीरः—स तु केनाप्यपसदेन पश्चादागत्य निहतः।

चामुण्डः—अस्तु, यदेव भगवता विधात्रा क्रियते तदेव शुभाय, युद्धे निहतः स्वर्गत एवासीत्। पुण्डीर ! जितमस्माभिरिति वीरपानं क्रियताम्।

पुण्डीरः—तथास्तु। ( सर्वे सामन्ताः आयुधानि परित्यज्य कवचानि चोत्तार्य एकतो निदधति। कुण्डलाकारेण स्थिता वीरपानं कुर्वन्ति। )

पृथ्वी०—गौरीमहम्मदो न गृहीतः। नापि ज्ञायते, मृतो मर्दितो, व्रणितो वा ?।

एकः सामन्तः—स तु मर्दितो व्रणितो वा भवेत्।

अपरः—अस्यैतेषां सैनिकानां पलायनात्कथाशेषमेवाऽसौ गत इति प्रतीयते।

समर०—किमिदं वास्तविकं पलायनम्, युद्धकौशल्यतो वा विहितम् ?।

बलभद्रः—

महार्तनादं कुर्वन्तो रुदन्तश्च पलायिताः।
तेन स्वं विजयं मन्ये सत्यं चापि पलायनम् ॥४॥

समर०—यद् भविष्यति तद् भवतु। वीरपानं क्रियताम्।

चामुण्डः—यदि पुनरागमिष्यन्ति, तदा पुनरप्येवमेव विधास्यामः, हनिष्यामश्च।

(सर्वे यथेच्छं पिबन्ति परस्परं जल्पन्ति हसन्ति च। वीरपानात् किञ्चिद् निद्रालव इव सर्वे संजायन्ते।)

[ततः कुतोऽपि तातारगौरीमहम्मदसहिताः कतिचन यवना आक्रमन्ते!
सर्वेऽपि सामन्ता निरस्त्रा अनुत्थीयमाना अर्धोत्थिता वा हताः
पृथ्वीराजश्च निरस्त्र एव गृह्यमाणो भुजदण्डाघातेन
कतिचन यवनान्निपातयति। परितः प्रतिगतैर्गौरीता-
तारप्रभृतिभिर्गृहीतो बद्ध्वा नीयते च। ]

तातारः—सेनापते! दिल्लीं विमर्द्य एतत्पुत्रकलत्रादिकं गृहीत्वा आनीयताम्। सर्वत्रैवार्यदेशे स्वाधिपत्यं च स्थाप्यताम्, तत्परिपन्थी जयचन्द्रोऽपि हन्यताम्।

सेना०—यथा भवतामादेशः। (शिरसि अङ्गुलिद्वयेन प्रणम्य चलितः)

[पटोन्नयनम्]

(दिल्ल्यां चन्दवरदायी स्थितः, साश्चर्यमितस्ततः पश्यति)

चन्दः—(मनसि) ज्ञायते पृथ्वीराजः पराजितः, सर्वेऽपि सामन्ता हताः।

(ततः श्रूयते, अन्तःपुरे आर्तनादः,)

(पुनःमनसि) संभावयामि, अधुनैवागत्य सर्वोऽपि समरवृत्तान्तः केनापि चरेण निवेदितः। यदस्तु (पुनः किञ्चिदन्तःपुरे गत्वा इङ्गिनी-

प्रभृतीनां दशाः संभावयति, सनिर्वेदम्। मनसि) मन्ये इच्छिनी पृथ्वीराजशरेण सह वह्नौ दग्धुं गच्छति। (पुनः मनसि)

क्षुद्रैरहस्करकरैरपि दूयते या
सैवाद्य दीप्तदहने ज्वलितुं प्रपन्ना।
न ज्ञायते किमु कदा विदधाति धाता
क्रीडां करोति मनुजैरखिलैर्यथेच्छम् ॥ ५ ॥

पृथाऽपि असंभावितं पतिमरणमापन्ना वीरतमस्य स्वपत्युः समरसिंहस्य शस्त्रं गृहीत्वा ज्वलितुं व्रजति।

(पुनरग्रतः किञ्चिद् गत्वा)

इयं संयोगिता पतिपराजयं श्रुत्वैव हृदयगतेरवरोधात्कथावशेषं गता। हा सर्वा अपि दग्धाः।
(पुनर्बहिरागत्य)

केयं वीरवधूदशाऽतिगहनं कारुण्यमापादिता
सर्वास्ताः स्वकमग्निसाद् विदधिरे भस्मावशेषं गताः।
चन्दोऽहं जगदम्बिका भगवती मद्वाग्वशित्वं गता
शत्रोर्वेश्मनि तादृगेव गहनं शोकं विधास्ये भृशम् ॥६॥

(चक्षुषी प्रमृज्य किंचिद् गत्वा) इदमस्मद्गृहम्, मां दृष्ट्वा जल्हन इत एवागच्छति।

जल्हनः—(आगत्य पादयोर्निपतति रुदन्।) पितः सर्वं विनष्टम्।

चन्दः—(साश्चर्यम्) कथमेष पराजयो जातः, यत्र पृथ्वीराजसमरसिंहचामुण्डप्रभृतयो योद्धारः सन्ति, तत्र कथमिवासौ यवनो जितः,

जल्हनः—पितः! ससैनिकस्य गौरीमहम्मदस्य पलायनेन विजयं मन्यमानाः, विजयपताकामारोप्य सुप्रसन्ना यदा वीरपानमदेन

किंचिन्निद्रालव इव सर्वे संजाताः तदा स गौरी कतिभिश्चन सैनिकैः सह समागत्य अनुत्थितानेव सर्वान् व्यनाशयत, महाराजं च गृहीत्वा स्वदेशमनयत।

चन्दः—इदं पृथ्वीराजराजस्व[1]पुस्तकं गृहाण। महाराजग्रहणपर्यन्तमेव मया लिखितम्। इदमपरं राज्ञा तद्वैरशोधनं जगदम्बिका-प्रसादात्संपादयिष्ये, तदपि संयोज्यम्।

जल्हनः—किं तत्।

चन्दः—

जगदम्बाप्रसादेन पृथ्वीराजशरादहम्।
विनाश्य गौरीयवनं विधास्ये वैरशोधनम्॥७॥

जल्हनः—पितः! जगदम्बाप्रसादान्निश्चयेन भवान् सफलीभविष्यतीति मे दृढः प्रत्ययः। परं भवतैव कथमिदं नोपवर्ण्य निबध्यते।

चन्दः - कार्यसंपत्तेः पूर्वमुपवर्णने लोकाः सर्वथा नैव प्रत्येष्यन्ति, संदेह-दृष्ट्याऽपि द्रक्ष्यन्ति, त्वदुक्तिशब्दसौन्दर्येण मत्कृतमेवेति प्रायः सर्वे ज्ञास्यन्ति।

जल्हनः—यथा भवतामादेशः (इति पुनः प्रणमति)

चन्दः—अहमेष गच्छामि (इति व्रजति।)

[पटोन्नयनम्।]

(स सेनापतिकः गौरीः प्रविश्य निबद्धम् आसीनं च पृथ्वीराजं पश्यन् साधिक्षेपं वदति।)

गौरी—क्व ते शौर्यम्?, क्व च सामन्ताः?

---

१—राजस्वं प्राकृते रासो। कगचजेति जकारवकारयोर्लोपे, दीर्घे, पुंस्त्वे च रासो इति।

पृथ्वी०—साहंकारम्—

वीरपाननिमग्नांस्तु शस्त्रास्त्रपरिवर्जितान् ।
पद्मासनसमासीनान् हत्वा वल्गसि दुर्मते! ॥८॥

गौरी—किं नाद्यापि शौर्यमदो व्यपगतः ? ।

पृथ्वी०—अरे रे यवनापसद ! अस्मच्चरणचुम्बक ! प्राणभिक्षुक ! स्वधर्मग्रन्थस्य कुरानस्य शपथं दूषयित्वाऽपि न लज्जसे । ( इति क्रूरदृष्ट्या निरीक्षते )

गौरी—( सक्रोधम् ) एष मां क्रूरं पश्यतीत्यस्य चक्षुषी निष्काश्येताम् । इति सेनापतिमाज्ञाप्य निर्गच्छति ।

( तत्र किञ्चिद् दूरे स्थितौ द्वौ सैनिकौ परस्परं किंचिद् वदतः )

एकः—मित्र ! एतत्संवादेन इदं ज्ञायते यदयं घग्घरयुद्धे पराजितो निबद्धश्चासीत्, चरणयोः प्रणिपत्य कुरानशपथेन सन्धिमकार्षीत् ।

द्वितीयः—सत्यम् ! एवमेव ज्ञायते, अत एव गान्धारप्रदेशे स्वाधिकारः परित्यक्तः ।

प्रथमः—स प्रदेशः सन्धौ उपायनीकृतः इति स्फुटमवगम्यते । मिथ्यैव सेनापलायनं व्याजीकृत्य स्वग्रहणं सन्धिकरणं च निह्नूयते, इतस्ततो गोष्ठीषु प्रकटयति—सैन्यपलायनादहमपि पलायितः ।

( ततः प्रविशति पृथ्वीराजचक्षुषी निष्काशयितुं सैनिकेन सह सेनापतिः । तत्रैव स्थितौ तौ सैनिकावपि लक्षीकृत्य । )

सेनापतिः—भोः सैनिकौ ! अस्य चक्षुषोर्निष्काशने युवामपि सहायकौ भवेतम् ।

( सैनिकौ साश्चर्यं पश्यतः, किञ्चिद् विवक्षू च । )

सेनापतिः—नात्र किमपि वक्तव्यम् ,असौ महाराजं गजनीपतिं क्रूरं पश्यतीति तस्याज्ञेयम् ।

सैनिकौ—यथा भवताम् आदेशः ।

[ पटोन्नयनम् । ]

( काषायाम्बरश्चन्दवरदायी गौरीमहम्मदस्य द्वारि सर्वकार्याधिकारिणः सविधे आसीनः )

अधिकारी—साधो ! श्रूयते, युष्माकं देशे श्रेष्ठतमा दैवज्ञाः सन्ति, ये भूत-भविष्य-वर्तमानवृत्तवक्तारो भवन्ति ।

चन्दः साधुः—सन्त्येव, किमत्र चित्रम् ।

अधि०—( हस्तं प्रसार्य ) मम हस्तं निरीक्ष्य ममेतिवृत्तं कथय ।

साधुः—( मनसा देवीमाराध्य तथा करोति ) त्वं दरिद्रसुतः, त्रयोदश-वर्षीयो वृक्षात्पतितः । विंशतिवर्षीयः संपत्तिमुपगतः, त्रयस्ते पुत्राः, पञ्च उत्पन्नाः आसन् , द्वौ मृतौ, त्रिंशतिवर्षीयः परमोच्चपदवीं सर्वाधिकारं चोपगतः । भार्या ते पतिप्रिया । उभयोर्गाढस्नेहश्चेति । कथय ? । किं सर्वं सत्यमेवास्ति न वा ? । किं किञ्चिदपि अन्यथाऽस्ति ? ।

अधि०—सर्वं सत्यमेव ( इति पञ्च रूप्यकाणि ददाति ) इमानि गृहाण ।

साधुः—न मे रूप्यकैः प्रयोजनम् , अहं विरक्तः साधुरस्मि ।

अधि०—अहम् अतिप्रसन्नोऽस्मि, तथापि किञ्चिदादेशय ।

साधुः—( पृष्ठे हस्तं दत्त्वा ) त्वं योग्यतमोऽसि, यद्यभिलषसि तदा मां गौरीमहम्मदस्य सविधे नय, तत्रातिचमत्कारि कार्यं राजानं दर्शयिष्ये ।

अधि०—यद्यपि कोऽपि वैदेशिको राज्ञः सविधे गन्तुं न प्रभवति, परं भवान् सत्यः साधुः, सर्वकार्यविरक्तः सूफी, तव प्रतिरोधे तु न किञ्चिदपि तर्कयामः इति क्षणमात्रं तिष्ठ । गौरीसविधे आदेश-मानेतुं गच्छामि ( इति तथा करोति । )

चन्द्रः—( मनसि )

क्रीं क्रीं स्वरूपे देवेशि मम सर्वस्वसाधिके।
गौरीहृदयमाविश्य मदुक्तौ तं नियोजय ॥६॥

( इत्याराधयति )

[ पटोन्नयनम् । ]

( गौरीसविधे अधिकारी स्थितः ।)

अधि०—महाराज ! भारतवर्षादेकः साधुः समायातः, भवन्तं द्रष्टुमभिलषति ।

गौरी—यथेच्छं वस्त्रपात्रादि धनं च दत्त्वा विसर्जय ।

अधि०—स तु दत्तं धनादिकं नाभिलषति । सूफीव ( विरक्त इव ) प्रतीयते । महाप्रभावशाली, तेजस्वी, भूतभविष्यद्वक्ता च ।

राजा—तर्हि तमानय ।

अधि०—( साधुसमीपं द्वारि आगत्य । ) साधो ! राजा स्थितः, भवन्तमानेतुं माम् आदिशति । ( उभौ प्रचलितौ । )

साधुः—( गौरीं दृष्ट्वा हस्तमुद्यम्य । )

स्वस्ति श्रीराजराजः सकलगुणगणग्रामणीर्भूरिकीर्ति-
र्न्यायैष्वावद्धकक्षो विपुलबलमहावैरिविध्वंसकारी ।
बुद्धौ वाचस्पतीशो दितितनयगुरोर्नीतिगर्वापहारी
सोऽयं सम्राऽड् महीन्द्रो जयतु भुवि गतः सर्वदिक्पालदेहः ॥

गौरी—( प्रणम्य ) कथय साधो ! किमर्थमागतोऽसि ।

साधुः—राजन् ! राजाधिराज ! त्वयि दिक्पाला इन्द्रादयः अंशेन तिष्ठन्तीति भवद्दर्शनात्सर्वेषां दिक्पालानां दर्शनं स्वत एव भविष्यति अतो भवन्तं द्रष्टुमापन्नोऽस्मि ।

गौरी—अस्मद्दर्शनं तु गतदिने राजमार्गे एव जातम्, पुनरिहागमने किं प्रयोजनम् ।

साधुः—अस्ति अपरं महत्प्रयोजनम् ।

गौरी—तदेवोद्भावय।

साधुः—श्रूयते भवतां गेहे पृथ्वीराजो निगडितः।

गौरी—अस्ति निगडितः,

साधुः—स एकदा तीर्थयात्राप्रसङ्गप्राप्तं मां रामकृतं वक्रप्ररोहितसप्ततालानां वेधं दर्शयितुं प्रतिज्ञातवान्, इति तद् द्रष्टुमिहागतोऽस्मि। यतो मा भवेत् तद्दर्शनाभिलाषया स्वर्गतौ प्रतिबन्धः।

गौरी—कथं तदुपपद्यते ?

साधुः—वक्रगत्या प्ररोहितान् सप्तानपि तालानेकेनैव बाणेन यथा रामोऽभिनत् तथैव वक्रगत्या इतस्ततः उपनिबद्धानि सप्तापि घटीयन्त्राणि एकेनैव शरेण भेत्स्यति।

गौरी—(विहस्य) नायमिदानीं स पृथ्वीराजः, किन्तु चक्षुर्विहीनः अस्थिचर्ममात्रपिनद्धदेहः अकिञ्चित्कर एव संजातः।

साधुः-तथापि मां तद्दर्शनार्थमादिश। अहं तत्कृतां प्रतिज्ञां स्मारयित्वा सज्जीकरिष्यामि।

गौरी—अस्तु यथेच्छं गच्छ। चक्षूरहितो यदि एवं विदध्यात् तदा अहं तद् राज्यं परावर्तिष्ये। अधिकारिन् ? (संज्ञया स्वसमीपमुपनीय, कर्णे) श्रोतव्यं किमयं वक्ति।

अधि० अस्तु-सर्वं तथैव विधास्ये, साधो! आगच्छ (इति उभौ चलितौ)।

[ पटोन्नयनम्। ]

पृथ्वी०—(एकाकी स्थितः स्वकृतकर्मणां मनसा पश्चात्तापं करोति) अहो व्यर्थमेव मया कर्णाटक्याः कृते महाबुद्धिशाली कैमासो हतः। रुक्मिणीं हरता कृष्णेन इव, सुभद्रां हरता अर्जुनेन इव कथं न मया संयोगितां हृत्वा पलायितम्। व्यर्थमेव काकाकह्-प्रभृतयश्चतुःषष्टिः सामन्ता विनाशिताः। आश्रुतः परिषदि सर्व-समक्षं हाहुलीरायस्तिरस्कृतः, (पुनः सनिर्वेदम्) गौरीं हन्तुं प्रतिजानानो धीरपुण्डीरः किमर्थं प्रतिषिद्धः, आः हा समर-भूमावपि वीरमानं कृतमिति, मन्ये भवितव्यतावशात् सर्वेषा-

मप्यस्माकं मौर्ख्यमेव जातम्, अथापि क्रोधं विदधतो मे चक्षुषो अपि निष्काशिते । अस्तु, यदेव भगवता विधात्रा क्रियते तदेव शुभाय भवतीत्यत्रापि भगवतः किमपि शुभमेवाभिलषितं स्यात् ।

( ततः प्रविशति अधिकारिणा सह साधुः । )

साधुः—भूपालरत्नं त्वामेष स्तौति साधुः सुहृद्वरम् ।
तालानां वेधसादृश्यं दर्शयिष्यसि मां कदा ॥ ११ ॥

पृथ्वी०—( मनसि ) ज्ञायते अयं साधुप्रच्छन्नवेषश्चन्दः ।
( प्रकाशम् ) इमां दशामापन्नोऽस्मि, कथं तत्संभाव्यते, इत्यशक्तोऽनुत्साहितश्च त्वां प्रणमामि ।

साधुः—( मनसि ) युद्धे अनागमनेन एष रुष्ट इव प्रतिभाति, इति प्रच्छन्नप्रकारेण सर्वं बोधयामि, महम्मदगौरीहननाय च सज्जीकरोमि ।

( प्रकाशम् )

राजन् ! विजयस्व । अहं तीर्थाटनं कुर्वन् कांगडाराज्ये प्राप्तः, तत्रत्यं राजानमनुकूलयितुं देवीमन्दिरे यदा ध्यानावस्थितोऽभवम् तदैव केनापि तन्मन्दिरेऽवरुद्धः । अथ पञ्चषदिवसानन्तरं केनापि तत्कपाटमुद्घाटितमिति ततो निःसृत्य सर्वतः पर्यटन् इहावरुद्धं भवन्तं श्रुत्वा तालभेदमिव प्रतिज्ञातं भवतो बाणकौशलं द्रष्टुमागतोऽस्मि ।

पृथ्वी०—सर्वं दर्शयितुं सन्नद्धोऽस्मि । परमस्यामवस्थायां कथमिव संभाव्यते ।

साधुः—अहं सर्वं सपादयिष्ये, खेदं जहीहि, श्री महम्मदो गौरी अपि द्रक्ष्यति, इदमपि तेनोक्तम्, सति भेदे अहं तद्राज्यं परावर्तयिष्ये ।

पृथ्वी०—यदि स वेधाय आज्ञापयिष्यति तदा तु मन्ये पारितोषिकमपि लप्स्ये गच्छ अहं सन्नद्धोऽस्मि, ( इति अधिकारिणा सह साधुः प्रचलितः । )

पृथ्वी०—( मनसि ) चक्षुषोर्निष्काशनं भगवता शुभायैव कारितम्,

येन अयं विश्वसिति, अन्धो दुर्बलश्च अकिञ्चित्कर एव (स्मित्वा) अरे मह्यमयं राज्यलोभं दर्शयति। अहं त्रिभुवनस्यापि राज्यं वैरशोधनापेक्षया तृणं मन्ये।

[ पटोन्नयनम्। ]

अधिकारी—( महम्मदगौरी सविधे स्थितः। ) महाराज ! अयं सूफीव सत्य एव साधुः। ताल्भेदातिरिक्तं किमपि नोक्तवान्। पृथ्वीराजस्तु पारितोषिके राज्यलाभं श्रुत्वा लालायितः, बलपौरुषविरहितमात्मानं मन्यमानोऽपि राज्यलाभलोभात् संनद्धः।

गौरी—साधुः कुत्रास्ति ?

अधि—स तु द्वारि स्थितः।

गौरी—प्रवेशय, ( ततः प्रविशति अधिकारिणा सह साधुः। ) साधो ! अतः परं किमनुष्ठेयम्।

साधुः—सप्त घटिकापात्राणि बन्धय, तमानय, भेत्स्यति।

गौरी—( सप्तघटिका बन्धयति ) अधिकारिन् ! मन्त्रिप्रभृतीन् आह्वय, तं च कारागारात् आनय। ( स तथा करोति। )

( पृथ्वीराजो नाट्येन परिस्खलन् आगच्छति। ततः मन्त्रिप्रभृतयः पञ्चगाः प्रविश्य यथास्थानमुपविशन्ति। पृथ्वीराजोऽपि प्रविश्य परिषदि चत्वरे स्थितः। )

साधुः—गौरी महाराज ! धनुर्बाणं चानाय्य दापय। ( स तथा करोति )

साधुः—( डमरुं वादयन् ) पृथ्वीराज ! राजन् ! त्वं क्षत्रियकुलकमलदिवाकरोऽसि, त्वयैव बहवो भूपाला विजित्य सोहार्देन सामन्तीकृताः ( स प्रसन्नः परिस्फुरितशरीरस्तिष्ठति )।

( साधुः तस्मै धनुर्बाणं च ददाति, स धनुराकर्षतीति धनुर्भङ्गं सञ्जातम् ततो धनुः प्रक्षिपति। )

साधुः—गौरी महाराज ! कस्यापि कठोरं शार्ङ्गं धनुर्देहि, यत्र पूर्णबलेन

आरोपितो बाणो लक्ष्यं भिन्द्यात्। ( पुनर्डमरुं वादयति। )

गौरी– अस्तु तथैव आनयामि। अधिकारिन्, मन्त्रिणः पितुः कठोरतमं धनुरानय। ( स आनेतुं गच्छति। )

मन्त्री तातारः—नाहमिमां क्रीडां कल्याणकरीं संभावयामीति ( जिगमिषति। )

गौरी –आस्यताम् २, चक्षुर्विहीनः किमयं विधास्यति। स्वकीयराज्यलाभलोभेन समुत्सुकश्च। तिष्ठ, पश्य २ ( स पुनस्तत्रैवास्ते। अधिकारी धनुर्बाणं चानीय ददाति )

साधुः—( गृहीत्वा पृथ्वीराजहस्ते नीत्वा पुनर्विरुदावलिं पठति। डमरुं च वादयति। ) राजन्! त्वयैव पितृवैरशुद्धये। गुर्जरदेशाधिपतिर्निहतः, तद्राज्यं च स्वायत्तीकृतम्।

पृथ्वी०–( नाट्येन बाणं संधाय समौर्वीकं बाणमाकर्षति, बाणस्तु मौर्वीकोदण्डयोरन्तरा लस्तके भवतीति स तद् धनुः प्रक्षिपति ) नानेन प्रयोजनम्, नेदं लक्ष्यं भेत्तुं शक्नोति।

साधुः—अस्यैव धनुरानाय्यताम्, ( स तथा करोति, चक्षुःसंज्ञया अधिकारिणमाज्ञापयति, स गच्छति। )

तातारः—नाहं शुभोदर्कं पश्यामि ( इति उत्थाय प्रचलितः )

गौरी—साधो! गृहाण! तस्यैवेदं धनुः। स साधुः पृथ्वीराजहस्ते समर्पयति।

( पृथ्वीराजश्चिरविरहितं स्वधनुरुपगत्य वक्षसा आलिङ्गति। )

शुम्भनिशुम्भविदारिणि जगदम्ब! त्वां प्रपन्नोऽस्मि।
मा लक्ष्यभेदपरतः कुत्रापि भवेच्च बाणोऽयम् ॥१२॥

( पुनः ताड्यन्तां घण्टिकाः )

( ततः कश्चित्सप्तापि घण्टिका ध्वानयति। पृथ्वीराजो नैव भिनत्ति। )

गौरी—अधिकारिन्! कथमयं न भिनत्ति।

अधि०–पारितोषिकलाभलिप्सया भवदाज्ञां प्रतीक्षते। यदा भवान् आज्ञा-

पयिष्यति तदैव भेत्स्यतीति पारितोषिक-लाभलिप्सया कारागारे एवोक्तम् । (चक्षुःसंज्ञया पुनर्घण्टिकास्ताडनेन ध्वनयति । )

गौरी—( अन्तिमघण्टिकाया ध्वनेरनन्तरम् ) वेधय ( इत्याज्ञापयति )

( पृथ्वीराजः वेध इति वर्णद्वयानन्तरमेव तत्तालु भिनत्ति, स भूमौ पतितः तत्क्षणमेव मृतः । )

पृथ्वी०—चन्दवरदायिन् ! छुरिकया मम हृदयं भेदय ।

चन्दः—नहि नहि पूर्वं त्वं भेदय ।

पृथ्वी०—अरे एते एवं विलम्बेन त्वां मां च ग्रहीष्यन्ति, इति त्वरितं भेदय, अहं तु मृतः सन्नपि त्वां भेत्स्यामि ।

चन्दः—

लोकोत्तरप्रकारेण विहितं वैरशोधनम् ।
स्थीयात्तत्ते यशस्तावद् यावच्चन्द्रदिवाकरौ ॥१३॥

अतः परं किं ते उपकरोमि ।

पृथ्वी०—तथापि इदं भरतवाक्यमस्तु ।

लोकाः सन्तु सुखान्विताश्च धनिनः सत्पुत्रपौत्रान्विताः,
स्वे स्वे कर्मणि तत्पराः कृतधियोऽप्यन्योन्यहर्षाश्रयाः ।
कुर्यासुः स्वकमन्दिरेषु यवना आलानशब्दं मुदा,
घण्टाशंखमृदङ्गवेदनिनदा भूयासुरार्येष्वपि ॥ १४ ॥

चन्दः—तथास्तु,

पटीक्षेपः ।

इति श्रीसर्वतन्त्रस्वतन्त्र विद्यावारिधि महामहोपाध्याय पं० मथुराप्रसाद दीक्षित-कृतौ दुःखान्ते वीरपृथ्वीराजनाटके षष्ठोऽङ्कः । समाप्तं चेदं नाटकम् ।

—:※:—

# म० म० दीक्षितजी की अन्य रचनाएं

१. पाणिनीयसिद्धान्तकौमुदी—यह वैयाकरणसिद्धान्तकौमुदी की प्रक्रियात्मक ही है। इसमें से फक्किका, प्रत्युदाहरण और लम्बी २ वृत्ति हटा दी है। अतः इससे व्याकरण का बोध केवल एक वर्ष में पूरा हो जायगा। इसमें सूत्र, वार्तिक और उदाहरणमात्र हैं। सूत्रार्थ ही तो वृत्ति है, अतः सूत्रसे ही सूत्रार्थ-प्रतीति होने से उसकी वृत्ति कहीं २ हटा दी है। अनुवृत्तिमात्र वृत्ति दी गयी है। यही तो पूज्य श्री १०८ स्वामी दयानन्दसरस्वतीजी का आदेश (सिद्धान्त) है। परीक्षार्थी छात्रों के लिये परमोपयोगी है। पूर्वार्ध ५० पत्र में समाप्त हैं। अतः दो घण्टे प्रतिदिन पढ़ने से केवल ६ मास में कौमुदी कण्ठस्थ हो जाती है। एवं व्याकरण करामलकवत् भासित हो जाता है। "कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।" जनता में प्रसिद्धि के लिए मूल्य व्ययमात्र ३॥)

हिन्दी टीका सहित कारकान्त—इसमें फक्किकाओं पर पूरा २ विशुद्ध शास्त्रार्थ और अत्यन्त सरल प्रकार से उनका समन्वय तथा प्रयोग साधुत्व है। तेवीस फार्म की पुस्तक—मूल्य केवल २)

२. पाली प्राकृत व्याकरण—इसमें केवल ७० सूत्र हैं। प्रतिदिन केवल २० मिनट ५ सूत्रों का अनुगम करने से पाली प्राकृत का १५ दिन में विद्वान् हो जाता है। प्रत्येक सूत्र को २०-२० उदाहरण दिये गये हैं। इसके पढ़ने के बाद नाटकों के प्राकृत की संस्कृत छाया देखने की आवश्यकता नहीं रहती है। कौन हिन्दी शब्द किस संस्कृत के स्वरूप से आया है? यह अपूर्व ज्ञान हो जाता है। इस पुस्तक में मानों गागर में सागर भर दिया गया है। मूल्य १॥)

३. भारतविजय नाटक—इसमें पाश्चात्य गवर्नमेंट के पूरे अत्याचार, झाँसी की रानी का युद्ध, कांग्रेस आन्दोलन, कांग्रेसियों के दुःख, जलियाँ वाले बाग के अत्याचार और अन्त में महात्मा गान्धी जी के हाथों में स्वराज्य देकर पाश्चात्य गवर्नमेंट के जाने का अभिनयात्मक दृश्य है। इसमें आठ चित्र हैं, उनसे ही सब घटनाओं का ज्ञान हो जाता है। साथ में हिन्दी अनुवाद है। तीन सरल अभिनेय गान है। मूल्य २॥)

४. वीर पृथ्वीराज विजय मूल्य १।)

५. शंकरविजय नाटक—इसमें श्रीशङ्कराचार्यजी का सभी दार्शनिकों से, नास्तिकों से, मीमांसकाचार्य मण्डन मिश्र तथा उनकी स्त्री से, एवं जैन, बौद्ध, कापालिकों से परमरोचक शास्त्रार्थ अभिनयात्मक वर्णन है। दर्शन शास्त्रों के ज्ञान में परमोपकारी है। मूल्य १)

६. भक्त सुदर्शन—देवीभागवत से उद्धृत आस्तिकता को दृढ़ करनेवाला काशीस्थ दुर्गादेवी जी का ऐतिहासिक वीररसात्मक यह अपूर्व नाटक है। इसमें ९ दर्शनीय तिरंगे चित्र हैं। ६ अङ्क हैं। केवल चित्रों के ही २) रु० हो जाते हैं। इसकी कविता सरल, रोचक है। एकवार आरम्भ करके पूरा पढ़ने को जी चाहता है। इसकी उपादेयता पर यू० पी० गवर्नमेण्ट ने ८००) पारितोषिक दिया है। एकवार अवश्य देखें। मूल्य केवल २) रु०।

७. गान्धी विजय—श्री महात्मा गान्धी जी ने नैटाल, चंपारन और भारत के स्वराज्य प्राप्ति के आन्दोलन-प्रकार और उसमें प्राप्त दुःख व सफलता का वर्णन है। इसमें प्राकृत के स्थान पर हिन्दी है। मूल्य ॥)

८. पृथ्वीराजरासो—परम प्राचीन अतिजीर्ण फोटो पर से लिया गया 'हिन्दी गेटो' इसका मूल है। इसके साहाय्य से निर्मित होने के कारण इसमें प्रक्षिप्त अंश जो कि पन्द्रहवीं सदी में हुआ है, नहीं है। अतः सिद्ध है कि यह तेरहवीं सदी की पुस्तक है। हिन्दी अनुवाद सहित प्रथम समय। मूल्य केवल १)

९. रोगिमृत्युविज्ञान—रोगी को देख कर उसके अरिष्टात्मक चिह्नों से उसकी मृत्यु के समय का निर्णय कर सकते हैं। यह वैद्यक शास्त्र की अपूर्व पुस्तक हैं। मूल्य केवल १॥)

१०. केलिकुतूहल—वैद्यक शास्त्र का होते हुये भ
ग्रन्थ है। प्रत्येक गृहस्थ को पठनीय है। मूल्य

११. केलिकुतूहल हिन्दीटीका सहित